सार्षपं क्रिमिकुष्ठघ्नं कफमेदोऽनिलापहम् ।
तैलमेरण्डजं भेदि मधूकं कफवातनुत् ॥ २
तैलं स्वयोनिवत्सर्वं

॥ इति तैलवर्गः ॥

त्रिदोषघ्नं मधु स्मृतम् ।
हिक्काश्वासज्वरच्छर्दिमेहतृष्णाविषापहम् ॥ ३

॥ इति मधुगुणाः ॥

॥ अथेक्षुवर्गः ॥

इक्षवो रक्तपित्तघ्ना बल्या वृष्याः कफप्रदाः ।
दन्तजस्तद्रसः पथ्यो विष्टम्भी यान्त्रिको गुरुः ॥ १
फाणितं पित्तलं तीव्रं विद्यान्मत्स्यण्डिको लघुः ।
खण्डं वृष्यं रसं स्निग्धं स्वाद्वसृक्[1] पित्तवातजित् ॥ २
नातिपित्तकरो वृष्यो वातघ्नः कफकृद् गुडः ।
स पित्तघ्नः परं पथ्यः पुराणोऽस्रप्रसादनः ॥ ३
रक्तपित्तहरा पथ्या सन्निहा(?)गुडशर्करा ।
द्राक्षोत्था वान्तिरेकघ्नी मधुजा ह्लादनी सुधा[2] ॥ ४

॥ इतीक्षुवर्गः ॥

॥ अथ मद्यवर्गः ॥

मद्यं पित्तकरं सर्वमम्लत्वात्[3] कफवातजित् ।
दीपनं हर्षणं बल्यं [4]पीतं युक्त्याऽन्यथा विषम् ॥ १
[5]शुष्कार्शःकफवातघ्नी गौडी स्रंसनपाचनी ।
[6]ऐक्षवी श्लेष्ममेदोघ्नी मार्द्वीकी कफवातजित् ॥ २
सक्षारो मधुरो रूक्षो मधूककुसुमासवः ।
रक्तपित्तकरास्तीक्ष्णाः सिकथाः सौवीरजातकाः ॥ ३

---

1. स्वादुस्त्रुक्
2. सुता
3. अम्लता
4. पित्त
5. सुनार्शः
6. ईक्षवी

[1]काञ्चिकं भेदि तीक्ष्णोष्णं कफमारुतनाशनम् ।
[2]आमश्रमक्लमहरं रुचिकृत् स्पर्शशीतलम् ॥ ४

॥ इति मद्यवर्गः ॥

## ॥ अथ कृतान्नवर्गः ॥

सिक्थैर्विरहितो मण्डः पेया सिक्थसमन्विता ।
घनसिक्था विलेपी स्यात् साध्या[3] क्वाथेऽर्धशेषके ॥ १
पाचनो दीपनः पथ्यो मण्डः स्याद् भृष्टतण्डुलैः ।
दीपनी पाचनी पेया ज्वरघ्नी बस्तिशोधनी ॥ २
विलेपी ग्राहिणी बल्या हृद्या तृड्घ्नी प्रदीपिनी ।
पायसं कफकृद्बल्यं कृशरा वातनाशिनी ॥ ३
सुधौतः प्रस्रुतः स्विन्नः कदुष्णो लघुरोदनः ।
ईषद्भृष्टो गतत्वक्को लघुः सूपः सुसाधितः ॥ ४
स्विन्नं निष्पीडितं शाकं हितं स्नेहादिसंस्कृतम् ।
तथा द्रव्यक्रियायोगमानाद्यैः सर्वमादिशेत् ॥ ५
वटकः केवलो बल्यो वृष्यः सन्तर्पणो लघुः ।
मोदको वातपित्तघ्नो गुरुरुच्यग्निपित्तकृत् ॥ ६
तिलपिण्याकविकृतिः शुष्कशाकं विरूढकम् ।
राजिकावटकं दृग्घ्नं दोषलं ग्लपनं गुरु ॥ ७
पैष्टिका गुरवो भक्ष्या वीर्योष्णाः कफपित्तलाः ।
वैदलाः श्लेष्मला ज्ञेया गुरवो भिन्नवर्चसः ॥ ८
वातपित्तहरो वृष्यो घृतपूरोऽग्निदीपनः ।
तोयेनालोडिता भक्ष्याः स्विन्नाश्चाम्भसि दुर्जराः ॥ ९
पित्तानिलहरा बल्या दृष्टिदा घृतपाचिताः ।
भक्ष्यास्तैलकृता दृष्टिवातघ्नाः पित्तनाशनाः ॥ १०
कुकूले कर्परे भृष्टाः [4]कन्दुङ्गारविपाचिताः ।
क्रमादपूपा लघवोऽनुष्णाः पथ्या न शीतलाः ॥ ११

---

1. काञ्जीरं 2. आमकृशु 3. सद्या 4. पट्टू

लाजास्तृट्छ[1]र्धतीसारकफपित्तहरा हिमाः ।
गुरवः पृथुका धाना बल्या विष्टम्भकारिणः ॥ १२
रसाला बृंहणी वृष्या स्निग्धा बल्या रुचिप्रदा ।
पानकं मूत्र॰[2] हृद्यं क्रमहृत्प्रीणनं गुरु ॥ १३
[3]अध्वोपवासकार्श्योष्णग्लानानां क्षीरमिष्यते ।
स्थूले मधुयुतं तोयमनुपानं कृशेऽशुभम् ॥ १४
[4]निहतोरःक्षतश्वासकासहिक्काप्रसेकिनाम् ।
ऊर्ध्वजत्रुगदार्तानामनुपानं न शस्यते ॥ १५

॥ इति कृतान्नवर्गः ॥

## ॥ अथ विषान्नज्ञानम् ॥

गन्धस्पर्शरसाद्यन्यत्सविषेऽन्ने निरीक्षिते ।
चकोरस्याक्षिवैराग्यं क्रोशन्ति शुकशारिकाः ॥ १
विरौति कुक्कुटो हृष्टो मयूरश्चातिमाद्यति ।
मार्जारो बहुकोपी स्यात् मर्कटो[5]ऽश्रूणि मुञ्चति २

॥ इति विषान्नज्ञानम् ॥

## ॥ अथ विरुद्धान्नम् ॥

द्विष्टविष्टम्भिदग्धामगुरुरूक्षहिमाशुचि ।
विदाहि शुष्कमत्यम्बुप्लुतं चान्नं न जीर्यति ॥ १
शाकाम्लफलपिण्याककुलत्थलवणैः सह ।
[6]निष्पावदधिमत्स्यैश्च प्रायः क्षीरं विरुध्यते ॥ २
मधुसर्पिर्वसातैलपानीयानि द्विशस्त्रिशः ।
एकत्र वा [7]समांशानि विरुध्यन्ते परस्परम् ॥ ३

---

1. छिद्य
2. मूर्क
3. अयोपबासकार्श्योष्णग्मानानां
4. निहतोरश्केर
5. मर्कपो
6. निर्पाव-
7. समांशनि

उष्णाम्भो माक्षिकात्पश्चाद्दशाहं कांस्यगं[1] घृतम् ।
फलं कदल्यास्तक्रेण दध्ना वा परिवर्जयेत् ॥ ४
[2]मीनान् कूपाम्बुमदिराकृसरागुडपायसैः ।
शष्कुलीं काञ्जिकेनैव रोगमृत्युप्रदां त्यजेत् ॥ ५

॥ इत्यन्नपानादिवर्गः ॥

॥ इति द्वितीयोऽध्यायः ॥

1. काश्यगं 2. मिनान्

अथ द्रव्यगुणवर्णनं नाम

# ॥ तृतीयोऽध्यायः ॥

## ॥ अथ कषायवर्गः ॥

राठाङ्कोलाढकीलम्बाम्रपुसोरुबुटङ्कणैः ।
देवदाळिकरञ्जोग्रापटु[1]तुत्थानि वान्तये ॥ १

॥ इति राठादिवर्गः ॥

त्रिवृत्[2]कङ्कुष्ठमार्कण्डीगवाक्षी नीलिनी वरा ।
शम्याकोरुबुदन्तिस्नुक्स्वर्णक्षीर्यो विरेचनाः ॥ २

॥ इति त्रिवृतादिवर्गः ॥

मधूकसार[3]वेल्लैला व्योषापामार्गसैन्धवैः ।
सराठाबृहतीबीजदार्वीभि[4]र्मूर्धरेचनाः ॥ ३

॥ इति मधूकादिवर्गः ॥

दशमूलं बलायुग्मं नताह्वा सुरदारु[5] च ।
स्थिरादिर्वीरवृक्षादिर्गणोऽयं पवनापहः ॥ ४

॥ इति वातघ्नवर्गः ॥

दूर्वावासाम्बुजारिष्टन्यग्रोधादिप्रियङ्गवः ।
काकोल्यादि[6]स्थिरे गुञ्जाशारिवादिश्च पित्तनुत् ॥ ५

॥ इति पित्तघ्नवर्गः ॥

मुस्तादिः सुरसादिश्च सालादिर्वत्सकादिकः ।
आरग्वधादि[7]रर्कादिर्मुष्ककादिः कफान्तकृत् ॥ ६

॥ इति श्लेष्मघ्नवर्गः ॥

1. कत्यानि 3. सारि 5. दारुवत् 7. कर्कादिररुः
2. कङ्कोष्ठ 4. दर्वीभु 6. वरे

स्थिरापुनर्नवैरण्डवृषर्षभकजीवकाः ।
श्वदंष्ट्राभीरुकाकोलीविदारीहंसपादिकाः ॥ ७
बृहत्यौ वृश्चिकाली च द्वे सहे मर्कटी बला ।
शोफगुल्मानिलश्वासकासपित्तहरो गणः ॥ ८

॥ इति स्थिरादिवर्गः ॥

वीरवृक्षजयादर्भवन्दाश्योनाकगोक्षुराः ।
वरीसैरेयमूर्वाश्च मूत्रकृच्छ्राश्मवातहृत् ॥ ९

॥ इति वीरतर्वादिवर्गः ॥

न्यग्रोधोदुम्बरप्लक्षमधूकाश्वत्थतिन्दुकाः ।
प्रियालबदरीपार्थनन्दिवृक्षाम्लवञ्जुलाः ॥ १०
पलाशारुष्करश्वेतलोध्रजम्बूत्रयं गणः ।
पित्तासृग्रोगनुद् व्रण्यो[1] दाहयोनिगदापहः ॥ ११

॥ इति न्यग्रोधादिवर्गः ॥

काकोल्यौ मधुकं शृङ्गी मेदे द्वे जीवकर्षभौ ।
प्रपौण्डरीकमृद्वीका ऋद्धिवृद्धिमहासहाः ॥ १२
पयस्या पद्मकं कौन्ती ह्येष वर्गोऽतिबृंहणः ।
स्तन्यश्च जीवनो वृष्यः पित्तास्रानिलनाशनः ॥ १३

॥ इति काकोल्यादिवर्गः ॥

शारिवापद्मकोशीरयष्टिकाश्मर्यचन्दनम् ।
मधूकश्च ज्वरच्छर्दिदाहतृट्पित्तरक्तजित् ॥ १४

॥ इति [2]शारिवादिवर्गः ॥

मुस्ता पाठा निशा तिक्ता वचैला रुग्विषा वरा ।
शोधनः पाचनः स्तन्यो योनिदोषव्रणापहः ॥ १५

॥ इति मुस्तादिवर्गः ॥

---

1. द्रण्यो 2. ग्राम्वादि

सुरसा कासमर्दश्च भूस्तृणं क्षवकोऽर्जकः ।
वेल्लाखुकर्णनिर्गुण्डयः कृमिव्रणविषापहाः ॥ १६

॥ इति सुरसादिवर्गः ॥

शालस्यन्दनकालेयधवसर्जार्जका अपि ।
शिरीषद्वयभूर्जाख्यं खदिरश्चन्दनद्वयम् ॥ १७
कदम्बो वाजिकर्णश्च करञ्जः क्षवकोऽगुरुः ।
वर्गोऽयं कफपाण्डुत्व[1]कुष्ठमेहविनाशनः ॥ १८

॥ इति शालादिवर्गः ॥

वत्सकातिविषामूर्वाभाङ्‌र्येला[2]कटुकोषणैः ।
वराश्योनाकपाठोग्रापञ्चकोलाजमोदकैः ॥ १९
वेल्लाजगन्धसिद्धार्थजीरकद्वयहिङ्गुभिः ।
वत्सकाद्यो ज्वरश्लेष्मगुल्मार्शोऽनिलशूलनुत् ॥ २०

॥ इति वत्सकादिवर्गः ॥

आरग्वधादिशार्ङ्गेष्टाकटुभिर्निम्बपाटलाः ।
मूर्वाघोण्टामृताराम्नापाठाभूनिम्बकूलकाः ॥ २१
करञ्जवत्ससैरेयसुषवीसप्तपर्णकाः[3] ।
मेहकुष्ठज्वरच्छर्दिविषश्लेष्महरो गणः ॥ २२

॥ इति आरग्वधादिवर्गः ॥

अर्को भार्ङ्गीङ्गुदी श्वेतकरञ्जौ शिखरी रसा ।
विशल्या तेजनी श्लेष्मविषकुष्ठव्रणापहः ॥ २३

॥ इति अर्कादिवर्गः ॥

ऊषकस्तुत्थकं हिङ्गु कासीसद्वयसैन्धवम् ।
सशिलाजतु कृच्छ्राश्मगुल्ममेहकफापहम् ॥ २४

॥ इति ऊषकादिवर्गः ॥

1. कृत्
2. भार्ङ्गै
3. वर्णकाः

वरणाग्निजयायुग्मकोरण्टद्वयशिग्रवः ।
मूर्वा शतावरी बिल्वं विषाणी बृहतीद्वयम् ॥ २५
करञ्जद्वितयं शुण्ठीदर्भाजाजिरुजाकरः ।
गणोऽयं विद्रधिश्लेष्ममेदोगुल्मशिरोऽर्तिनुत् ॥ २६

॥ इति वरणादिवर्गः ॥

आमलक्यभया कृष्णा चित्रकश्चेत्ययं गणः ।
सर्वज्वरकफातङ्कभेदी वृष्योऽग्निदीपनः ॥ २७

॥ इति आमलक्यादिवर्गः ॥

गुडूचीनिम्बधान्याकपद्मकं चन्दनान्वितम् ।
तृष्णादाहारुचिच्छर्दिसर्वज्वरहरो गणः ॥ २८

॥ इति गुडूच्यादिवर्गः ॥

पिप्पल्यग्निवचावत्सकोलग्रन्थिकमुस्तकाः ।
विश्वैलाऽतिविषाकौन्तीचव्योषणयवानिकाः ॥ २९
भार्ङ्गीमूर्वाजमोदाख्यवराजाज्यः ससर्षपाः ।
हिङ्गुतिक्ताविडङ्गानि वातश्लेष्माग्निमान्द्यनुत् ॥ ३०

॥ इति पिप्पल्यादिवर्गः ॥

वचामुस्ताभयादारुनागरातिविषा गणः ।
हरिद्राकलशीदारुनिशा मधुकवत्सकौ ॥ ३१
एतौ वचाहरिद्रादिवर्गौ सर्वविषापहौ ।
आमातिसारशमनौ स्तन्यदोषविशोधनौ ॥ ३२

॥ इति वचाहरिद्रादिवर्गः ॥

लोध्ररम्भा[1]पलाशाब्दगुञ्जामोचाकदम्बकः ।
सराख्यासरलः स्तम्भी कफव्रणविषापहः ॥ ३३

॥ इति लोध्रादिवर्गः ॥

---

1. फला

अम्बष्ठा धातकीलोध्रसमङ्गापद्मकेसरम् ।
मधुकं सरलो बिल्वं रक्तातीसारहृद्गणः ॥ ३४

॥ इति अम्बष्ठादिवर्गः ॥

मुष्ककं त्रिफलाराजवृक्षार्काग्निस्नुहीवचाः ।
पलाशः शिंशपा वर्गो[1] मेदोऽर्शोऽश्मरिमेहहा ॥ ३५

॥ इति मुष्ककादिवर्गः ॥

उत्पलं कमलं पद्मं कह्लारं लोहितोत्पलम् ।
मधुकं[2] चेति पित्तासृग्विषच्छर्दिहरो गणः ॥ ३६

॥ इति उत्पलादिवर्गः ॥

एलानताम्बुमांसित्वक्पत्ररुग्दारुसर्जकैः[3] ।
[4]बोळं ध्यामपुरे कण्डूविषवातकफान्तकृत् ॥ ३७

॥ इति एलादिवर्गः ॥

बिल्वाग्निमन्थश्योनाकश्रीपर्णीपाटला महत् ।
दीपनं कफवातघ्नं पञ्चमूलमिदं स्मृतम् ॥ ३८

॥ इति बिल्वादिवर्गः ॥

[5]पृश्निपर्णी शालि[6]पर्णी बृहतीद्वयगोक्षुरम् ।
बृंहणं वातपित्तघ्नं कनीयः पञ्चमूलकम् ॥ ३९

॥ इति [7]पृश्निपर्ण्यादिवर्गः ॥

उभयं दशमूलं स्यात्सन्निपातज्वरार्तिहृत् ।
हिक्काकासकफश्वासज्वरवातादिदोषनुत् ॥ ४०

॥ इति दशमूलवर्गः ॥

विदारी शारिबा छागश्रृङ्गी वत्सादनी निशा ।
कृच्छ्रपित्तानिलं हन्याद्वल्लीजं मूलपञ्चकम् ॥ ४१

॥ इति विदार्यादिवर्गः ॥

---

1. पलाशी शम्यावर्गो
2. चिति
3. धारुसर्जकैः
4. बोटध्याम
5. पृष्ट
6. फला
7. पृष्ठ

पानप्रलेपतैलादि कुर्याद्वैद्यवरो गणैः ।
यथालाभं यथादोषं त्वलाभे तद्विधं[1] न्यसेत् ॥ ४२

॥ अथ क्वाथादिपरिभाषा ॥

क्वथ्याच्चतुर्गुणं वारि पादस्थं तच्चतुर्गुणम् ।
स्नेहात् स्नेहसमं क्षीरं कल्कश्च स्नेहपादिकः ॥ १
संवर्तितौषधः पाकः पानवस्त्यै स मध्यमः[2] ।
मृदुर्नस्ये खरोऽभ्यङ्गे सामान्येयं प्रकल्पना ॥ २
स्नेहे [3]सिद्ध्यति शुद्धाम्बुनिष्क्वाथस्वरसैः[4] क्रमात् ।
कल्कस्य योजयेदंशं चतुर्थं षष्ठमष्टमम् ॥ ३

॥ अथ माषादिपरिभाषा ॥

षड् गुञ्जा माषः स्याच्चतुर्गुणाः[5] [6]शाणकर्षपलकुडुबाः[7] ।
प्रस्थाढकार्मणवहाः[8] कर्षौ शुक्तिः [9]पलाष्टकं मानी ॥ १
[10]पलशतकेन तुला स्याच्छुष्केष्वेवं द्रवार्द्रयोर्द्विगुणम् ।
द्रव्यविशेषेऽनुक्ते प्रायो मूलं लवे तु समता स्यात् ॥ २
कफरोगेऽद्यात्प्रातर्निशि जत्रूर्ध्वरुजौ[11] मरुति चान्ने ।
तृड्वमिहिक्काकासश्वासविशेषौषधं भूयः ॥ ३

॥ अथ लोहमण्डूरमारणम् ॥

लोहरजो दरदयुतं गोऽम्बुवराद्विपपुटैर्मृतिं याति ।
मण्डूरमक्षतप्तं मूत्रहिमं चाष्टधा तद्वत् ॥ १

॥ इति द्रव्यगुणाध्यायस्तृतीयः ॥

---

1. तद्वदिदं
2. समद्यमः
3. द्रव्यवि
4. स्तुरसैः
5. गणाः
6. श्याण
7. फल कुडुबाः
8. णाक्षाः
9. फलाष्टकं
10. फल
11. निशीजत्रूर्द्धरुचौ

## अथ स्नेहादिनिरूपणं नाम

# ॥ चतुर्थोऽध्यायः ॥

### ॥ अथ स्नेहविधिः ॥

पट्वाज्यं केवलाज्यं च व्योषतैलं पिबेद्वलात् ।
पक्कमच्छं तथा शीतं स्नेहक्लेशसहो बली ॥ १
मात्रा स्नेहे तथा काथ्ये चतुस्त्रिव्येककर्षजाः ।
स्नेहेऽनु[1]पानमुष्णाम्बु तस्योद्गारेऽरुचौ तृषि ॥ २
अजीर्णे वामितः स्निग्धः सोष्णां पेयां पिबेत्सुखी ।
एवं सप्तत्रिपञ्चाहं पिबेत्क्रूरादिकोष्ठके ॥ ३
जीर्णे[2]ऽन्ने ह्यस्तने स्नेह्यः शुद्ध्यै[3] शान्त्यै बुभुक्षितः ।
सुकुमारः कृशो वृद्धो घर्मे चान्नयुतं पिबेत् ॥ ४
सद्यः स्नेहनकृत् क्षीरं धारोष्णं साज्यशर्करम् ।
तथा स्नेहकणासिन्धुदधिमस्तूनि वा पिबेत् ॥ ५
वातानुलोम्यं दीप्तोऽग्निर्वर्चः स्निग्धम[4]संहतम् ।
स्नेहोद्वेगः क्लमः सम्यक् [5]स्निग्धे [6]रूक्षे विपर्ययः ॥ ६
अतिस्निग्धे तु पाण्डुत्वं घ्राणव[7]क्त्रगुदस्रवाः ।
तत्रेष्टं रूक्षणं स्वेदं यवतक्रजलादिभिः ॥ ७
नवज्वरमदाजीर्णतृण्मूर्छाऽरतिवान्तिभिः ।
पीडितैर्दुर्बलैः स्थूलैः स्नेहो वर्ज्यः कफोल्बणैः ॥ ८
चिन्ताग्निश्रमरो[8]धस्त्री[9]शोकक्रोधाहिमानिलान्[10] ।
पानात्यशनभाष्याहःस्वप्नधूमातपांस्त्यजेत् ॥ ९

---

1. म्बु 4. सम्घ्र 7. वक्त्र 10. नुलात्
2. नैरोदनैः, 5. स्निद्धे 8. रोद
3. शुद्धे 6. रूक्ष 9. स्त्रि

## ।। अथ स्वेदविधिः ।।

कफे तापोऽग्नि[1] फालाद्यैस्तथा बाष्पोष्मणापि च[2] ।
उपनाहोऽनिले [3]तद्वन्नैर्मिश्रापित्तेषु सेचनम् ।। १

सुस्विन्नो लाघवस्वेदश्रमनैरुज्यमार्दवैः ।
अतिस्विन्ने च पित्तोक्ता रुजस्तत्र हिमाः क्रियाः ।। २

न स्वेदयेद्भुक्तविरिक्तपीत-
संस्तम्भनीयोदरकुष्ठरूक्षान् ।
तृट्पाण्डुपित्तास्रकृशप्रमेह-
गर्भान्विताश्चात्ययिकं विहाय ।। ३

।। इति स्नेहस्वेदनाध्यायश्चतुर्थः ।।

---

1. पाल
2. बाष्पात्मदान्यजः ।
3. तद्

# ॥ पञ्चमोऽध्यायः ॥

## ॥ अथ वमनविधिः ॥

स्निग्धः स्विन्नो [1]भृशोत्क्लिष्टकफः साधारणे दिने ।
पीत्वा पेयाज्यमाकण्ठं क्षीरं वात्रौषधं पिबेत् ॥ १
यष्टिकाथयुतं क्षौद्रं तेन साधु वमत्यलम् ।
कृसरां राठसंसिद्धां तद्बीजैर्वा श्रृतं पयः ॥ २
पीत्वा राठकषायं वा सिन्धुकृष्णान्वितं वमेत् ।
[2]तन्मना जातहृल्लासोऽनुच्चस्थोभिर्षक्षुरः ॥ (?) ३
कण्ठमेरण्डनाळाद्यैः स्पृशन् कोष्णाम्बुपो मुहुः ।
पित्तान्तं वमनं सम्यक्कुक्षिहृन्मूर्धलाघवम् ॥ ४
असम्यग्वमने जाड्यकण्डूकुष्ठज्वरादयः ।
[3]सफेनस्त्वतियोगः स्याद्दाहाद्यानिलरुङ् मृतिः ॥ ५
तत्र शीतक्रिया सद्यः सेकपानाविरेचनैः ।
दुर्बलास्थापिताशश्विवतृण्मूत्रानिलरोगिणः ॥ ६
गुल्मोदावर्तदुर्वाम्योदरिणश्च न वामयेत् ।

॥ इति वमनविधिः ॥

## ॥ अथ विरेचनविधिः ॥

स्निग्धस्विन्ने सुवान्ते च पक्वदोषे विरेचनम् ।
बलकोष्ठानुरूपं स्यादन्यथा ग्रहणीकरम् ॥ १
त्रिवृत्सैन्धवशुण्ठीनां चूर्णमम्लैः पिबेन्नरः ।
वातार्दितो[4] विरेकायामृतवत् क्षीरसेवनम् ॥ २

---

1. निशोत्कृष्ट
2. तच्छिरो.
3. न
4. वातार्धितो.

पित्तरोगे त्रिवृच्चूर्णं स्वादुकाथादिभिः पिबेत् ।
त्रिफलाकाथमूत्रैश्च सव्योषैः कफपीडितः ॥ ३
व्योषदन्तित्रिवृत्पथ्यानीलिनीगुडकल्पितः ।
मोदकस्त्रि[1]सुगन्धाढ्यो रेचनं सर्वरोगनुत् ॥ ४
स्नुक्क्षीरभावितं चूर्णं त्रिवृन्नील्योर्गुडाज्यवन्[2] ।
त्रिसुगन्धयुतं लेह्यं विरेकायोदरादिषु ॥ ५
क्षुल्लाघवप्रसन्नत्वं श्लेष्मान्तं[3] साधु रेचनम् ।
मिथ्याविरेचने कण्डूकुष्ठजाड्यादयो गदाः ॥ ६
अतिरेके गुदभ्रंशः शूलमूर्छाऽ[4]सृजः स्रुतिः ।
तस्मिन् शीतोपचारोऽ[5]सृक्पानसेचनवान्तिभिः ॥ ७
न विरेच्याः क्षयिश्रान्ताः शल्याक्रान्तात्पवह्नयः ।
नवज्वरप्रतिश्यायिसूतास्थापितदुर्बलाः ॥ ८

॥ इति विरेचनविधिः ॥

## ॥ अथ नस्यविधिः ॥

नस्यं साधारणे काले निरन्ने स्विन्नज[6]त्रुके ।
सूत्ताननम्रशीर्षस्य क्रमान्नासापुटद्वये ॥ १
बिन्दुः स्यात्तर्जनीपर्वद्वयमग्नोद्धृतोज्झितः ।
मात्राः स्युस्ते दशाष्टौ षट् स्नेहेऽन्यत्र द्विवर्जिताः ॥ २
भैषज्यावधि निष्ठीवन् द्विस्त्रिर्वा नस्यमाचरेत् ।
दद्यात् स्नेहं च रूक्षान्ते सम्यग्योगेऽक्षिपाटवम् ॥ ३
गुडनागरयोर्नस्यं स्याद्वा सैन्धवकृष्णयोः ।
तथा षड्बिन्दुतैलादि सर्वजत्रूर्ध्वरोगजित् ॥ ४
व्याघ्रीशिग्रु[7]शिरीषोत्थबीजं वा क्षतरञ्जकम् ।
नाड्यास्यं वायुनाध्मातं दुष्टपीनसहृत्परम् ॥ ५

---

1. स्त्री
2. मत्
3. आमान्तं
5. द्रक्
6. जत्वके
7. शीघ्र

न नस्यं पीतपानेच्छुस्नातस्नानेच्छुकादिषु ।
स्रुतास्रास्थापितश्वासिशुद्धदुर्दिवसेषु च ॥ ६
आसीनोन्मुखनासायां स्नेहबिन्दुद्वयं क्षिपेत् ।
प्रतिमर्शः स सर्वेषां सदा स्वस्थेऽक्षजाड्यहृत् ॥ ७

## ॥ अथाणुतैलम् ॥

जीवन्तीजलदेवदारुजलदत्वक्सेव्यगोपीहिमं
दार्वी[1]त्वङ्मधुक[2]प्लवागरुवरीपुण्ड्राह्वबिल्वोत्पलम् ।
धावन्यौ सुरभिं स्थिरे कृमिहरं पत्रं त्रुटीं रेणुकां
किञ्जल्कं कमलोत्पलं शतगुणे दिव्येऽम्भसि क्वाथयेत् ॥ ८
तैलाद्रसं दशगुणं परिशिष्य तेन
तैलं पचेच्च सलिलेन दशैव वारान् ।
पाके क्षिपेच्च दशमे सममाजदुग्धं
नस्यं महागुणमुशन्त्यणुतैलमेतत् ॥ ९

॥ इति नस्यविधिः ॥

## ॥ अथानुवासनविधिः ॥

वस्तेः स्वर्णादिभिर्नेत्रं गोपुच्छं द्वादशाङ्गुलम् ।
तस्याङ्गुष्ठकनिष्ठाभे मूलाग्रे तत्प्रवेशके ॥ १
संघट्टय कर्णिकाप्रान्ते त्र्यङ्गुले द्वे च मूलके ।
तन्मध्ये बन्धयेद्वस्तिं मृदुं भेषजधारिणम् ॥ २
तस्योत्तानस्य [3]पार्ष्णिभ्यां त्रिः [4]स्फिजौ ताडयेत्तथा ।
शय्यां त्रिरुत्क्षिपेदङ्घ्रिऋजूच्छीर्षस्य पार्ष्णिके ॥ ३
त्रिर्हन्यान्मुष्टिनाङ्गं च [5]रुजि स्निग्धं[6] तु मर्दयेत् ।
स्थिते स्नेहेऽनुवासः स्यात्स्रुतेऽन्यं योजयेत्तथा ॥ ४
स्रुते यामत्रयादर्वाग्दीप्ताग्नेर्लघु भोजयेत् ।
अस्रुतेऽहर्निशं[7] स्राव्यो वर्तिभिस्तीक्ष्णवस्तिभिः ॥ ५

---

1. तन्
2. स्रव
3. पार्ष्णि
4. स्फिचौ
5. रुगे
6. स्निग्धं
7. द्यनिशा

धान्यविश्वाम्बु स प्रातर्द्वितीयेऽह्नि तृतीयके ।
अनुवास्यस्तथैवान्ते विषमास्निग्धताऽवधेः ॥
दुर्बले त्रिलवास्वाङ्घ्रि वृद्धं स्नेहादि कल्पयेत् ।(?)
न तेऽनुवास्या गळगण्डपाण्डु[1]श्लेष्मोदराढ्यानिलपीनसार्त्ताः ॥
प्लीहापचि[2]श्लीपदकामलार्तमेदस्व्यनास्थाप्यकमेहिनश्च ।

॥ इत्यनुवासनविधिः ॥

## ॥ अथ निरूहणकल्पविधिः ॥

तृतीये पञ्चमे वाऽह्नि शुभे मध्यन्दिने गते ।
स्निग्धस्नाते निरन्ने तु प्राग्वद्वस्तिं प्रपीडयेत् ॥ १
उत्तानशयनस्त्रिंशन्मात्रास्तूत्कटक[3]स्त्यजेत् ।
वेगे तु फलवत्याद्ये[4] स्नातश्चाद्यान्मुहूर्ततः ॥ २
सद्यःसृते द्वितीयादीन् सुविरिक्तावधेर्भजेत् ।
स्नात्वा कोष्णाम्बुना त्वद्याच्छाल्यन्नं च सुखाश्रये ॥ ३
वस्तेरुपद्रवा जाताः [5]साध्यास्ते द्राक् [6]स्वभेषजैः ।
ईषत्सान्द्रोष्णतीक्ष्णाम्लपटुस्निग्धं निरूहणम् ॥ ४
त्रिपलौ[7] माक्षिकस्नेहौ कार्षिके [8]मिशिसैन्धवे ।
पलं गुडस्य कल्काम्लक्षीरमूत्ररसा दश ॥ ५
[9]साष्टराठकषायस्य पलविंशतिरेकतः ।
यथायोगं विमृद्नीयान्निरूहश्च षडञ्जलिः ॥ ६
वातघ्नौषधनिष्काथस्त्रिवृतासैन्धवैर्युतः ।
वस्तिरेकोऽनिले स्निग्धः स्वाद्वम्लोष्णो रसान्वितः ॥ ७
[10]न्यग्रोधादिगणकाथकाकोल्यादिसितायुतौ ।
पित्ते स्वादुहिमौ साज्यक्षीरेक्षुरसमाक्षिकौ ॥ ८
आरग्वधादिनिक्काथवत्सकादियुतास्त्रयः ।
रूक्षाः सक्षौद्रगोमूत्रास्तीक्ष्णोष्णकटुकाः कफे ॥ ९

1. पाङ्गु 4. द्राक्षाद्योर्वा 7. फला 10. नेग्रो
2. अपजि 5. साद्यास्ति 8. मिति
3. तत्कुटक 6. स 9. सोष्ण

दशमूलीकषायस्य [1]पलानि दश कार्षिके ।
शताह्वासैन्धवे राठं क्षौद्रतैलं चतु[2]ःपलम् ॥ १०
वस्ति[3]र्निर्यन्त्रणो वृष्यो बल्यो [4]वर्ण्योऽर्धमात्रकः ।
पक्षवातास्रशूलादिसर्वरोगहरः परः ॥ ११
गोमूत्रस्य [5]पलान्यष्टौ कर्षौ सिन्धुशताह्वयोः ।
अम्लिका[6]गुडयोर्द्वे द्वे क्षारवस्तिः सुखोष्णकः ॥ १२
शूलं विट्संगमाध्मानं मूत्रकृच्छ्रं सुदारुणम् ।
कृम्युदावर्तगुल्मादीन् सद्यो हन्यान्निषेवितः ॥ १३
शुक्ति[7]पलकर्षकुडुवै[8]र्गुडाम्लिकासिन्धुजन्मगोमूत्रैः ।
[9]करणीयोऽल्पस्नेहः शूलानाहान्त्रवातहरः ॥ १४
अनास्थाप्याः क्षतोरस्कक्षीणलीनगुदार्शसः ।
आमातिसारसंशुद्ध[10]च्छिद्रबद्धजलोदरी ॥ १५
प्रसेकवमथुश्वासकासहिक्काल्पवह्नयः ।
मधुमेही तथा[11] कुष्ठी गर्भिणी चोनसप्तमा ॥ १६
पक्षाद्विरेको वमिते ततः पक्षान्निरूहणम् ।
सद्यो निरूढश्चा[12]न्वास्यः सप्तरात्राद्विरेचितः ॥ १७
न [13]नस्यमूनसप्ताब्दे ना[14]तीताशीतिवत्सरे[15] ।
[16]न चोनाष्टादशे धूमः कवलो [17]नोनपञ्चमे ॥ १८
न शुद्धिरूनदशमे न चातिक्रान्तसप्ततौ ।
बालादीनां हितो वस्तिःस्नेहाद्यः पाचनादनु ॥ १९

॥ इति निरूहणकल्पविधिः ॥

॥ इति पञ्चकर्माध्यायः पञ्चमः ॥

---

1. फलानि
2. ष्फ
3. वस्तेनियन्त्रणो
4. वर्णे
5. फ
6. अम्मि
7. फ
8. भै
9. वैकरणे
10. त्फि
11. दा
12. नास्यः
13. तस्य मूल
14. सिताशित
15. रम्
16. व
17. नू

## अथ धूमपानादिनिरूपणं नाम

# ॥ षष्ठोऽध्यायः ॥

### ॥ अथ धूमपानविधिः ॥

शरावसंपुटे वह्निगर्भे क्षिप्त्वौषधादिकम् ।
ऊर्ध्वच्छिद्रस्थनाड्या त्रिस्त्रिभिश्च ग्रहमोक्षणम् ॥ १
पिबेद्धूमं सुखासीनो विवृतास्यस्तु [1]नासया ।
उत्क्लिष्टे मूर्धगे दोषे मुखेनोत्क्लेशनाय च ॥ २
[2]पीतं कण्ठगतं त्वेनं मुखेनैव वमेत्सदा ।
तीक्ष्णं कफेऽनिले स्निग्धं मध्यं वातकफे पिबेत् ॥ ३
त्रिचतुःपञ्चभिस्तेषु नेत्राण्यष्टगुणाङ्गुलैः ।
सुषिरो नेत्रषड्भागो [3]मध्यवार्तिर्यवाकृतिः ॥ ४
शिरोविरेचनैस्तीक्ष्णः स्निग्धः सर्जपुरादिभिः ।
एलाद्यैर्नतकुष्ठान्यै[4]र्धूमः प्रायोगिको भवेत् ॥ ५
नाडी दशाङ्गुला कासे[5] वर्तिर्व्योषशिलादिभिः ।
न [6]हिता पाण्डुपित्तास्रतिमिरोदरमेहिनाम् ॥ ६
हृत्कण्ठेन्द्रियसंशुद्धिः सुपीते मूर्धलाघवम् ।
अतिपीते गदाः पैत्ता[7]स्तान्यथास्वं हिमैर्जयेत् ॥ ७

कासः श्वासः पीनसो विस्वरत्वं
पूतिर्गन्धः पाण्डुता केशदोषः ।
कर्णास्याक्षिस्रावकण्डूतिजाड्य-
तन्द्राहिध्मा धूमपं न स्पृशन्ति ॥ ८

॥ इति धूमपानविधिः ॥

---

1. नाशयम्  3. माव  5. काशे  7. पैत्यं
2. व्यस्त  4. आद्ये  6. स्निग्धा

## ॥ अथ गण्डूषकवलधारणम् ॥

निर्वाते सातपे[1] स्विन्नमर्दितस्कन्धकन्धरः ।
गण्डूषमपिबन् किञ्चिदुन्नतास्यो [2]विधारयेत् ॥ १
कफपूर्णास्यता यावद्दोषैर्द्रवभेषजैः ।
असंचार्यो मुखे पूर्णे [3]गण्डूषः कवलोऽन्यथा ॥ २
तिलकल्कोदकं दन्तमुखरोगे च वातिके ।
तैलं सदा हितं सर्पिः पयो वा क्षतदाहयोः ॥ ३
धान्याम्लं मुखशोषघ्नं सपटूष्णं तु [4]जाड्यहृत् ।
कोष्णाम्बु मुखजाड्यघ्नं तृड्दाहव्रणहृन्मधु ॥ ४
[5]साध्याः [6]प्रसेकहृल्लासतृट्तन्द्रारुचिपीनसाः
ऊर्ध्वजत्रुजरोगाश्च गण्डूषैः कवलग्रहैः ॥ ५

॥ इति गण्डूषकवलधारणम् ॥

## ॥ अथ प्रतिसारणम् ॥

कल्को रसक्रिया चूर्णस्त्रिविधं प्रतिसारणम् ।
प्रयुञ्ज्यात्कफरोगेषु गण्डूषविहितौषधैः ॥ ६

## ॥ अथ शिरोवस्तिः ॥

अभ्यङ्गसेकपिचवो बस्तिश्चेति यथोत्तरम् ।
दोषघ्नं मूर्धतैलं स्यात्तच्च घ्राणास्यसंस्रवात् ॥ १
शुद्धाक्ते[7] स्वेदिते सायं शिरोबस्तिकरो भवेत् ।
कराधवि[8]स्तृतं चर्मपट्टमाकर्णबन्धनम् ॥ २
माषा[9]दिलिप्तमच्छिद्रं कोष्णस्नेहैः प्रपूरितम् ।
धारयेद्वाकसहस्राणि दशाष्टौ षट् चलादिषु ॥ ३
एकं स्वस्थे[10] विमृद्नीयात् स्कन्धादि दिन[11]सप्तकम् ।
मूर्धतैलं शिरःकेशस्वरेन्द्रियरुजापहम् ॥ ४

---

1. सातपी
2. विदा
3. कण्डूषः
4. स तु जाड्यहृत्
5. साद्याः
6. प्रसित
7. शुद्धोक्ते
8. सृ
9. सा
10. वस्थि
11. द्येवद्यु

## ॥ अथ कर्णपूरणम् ॥

धारये[1]त्पूरणं कर्णे कर्णमूलं विमर्दयेत् ।
रुजः स्यान्मार्दवं याव[2]न्मात्रा[3]शतमवेदने ॥ १

## ॥ अथ तर्पणम् ॥

तर्पणं तु समे काले नेत्रे पालिं बहिःकृताम् ।
यथास्वं [4]साधिताज्येन[5] संपूर्योन्मीलयेद् दृशम् ॥ १
वर्त्म[6]सन्धि[7]सित[8]श्यामदृङ्मन्थरुजि[9] धारणम् ।
एकत्रिपञ्चसप्ताष्टदशमात्राशतानि तु ॥ २
दश वाते कफे पञ्च पित्ते स्वस्थे च षट् तथा ।
ततो[10] धूमं पिबेद्व्योम[11] भास्वरं नावलोकयेत् ॥ ३
इत्थं प्रतिदिनं वाते पित्ते त्वेकान्तरं कफे ।
[12]स्वस्थे तु द्व्यन्तरं योऽयमा [13]दृग्वैशद्यलाघवात् ॥ ४

## ॥ अथ सिराविधिः ॥

न सम्यगुपचारैर्ये रोगाः सिध्यन्ति तेऽसृजा[14] ।
सतृणमदास्यलावण्यास्तत्रोद्रिक्ते सिराव्यधः[15] ॥ १
जत्रूर्ध्वे ते ललाटस्थाः [16]कुक्षिस्थे मणिबन्धजाः ।
कट्यधो गुल्मजाः स्राव्याः क्षिप्रमर्मोर्ध्वगाऽङ्घ्रिगे ॥ २
सद्यःस्निग्धरसान्नादं स्वल्पतप्तं बलान्वितम् ।
यन्त्रयित्वा यथास्थानं [17]ऋजुर्वेध्या सिरोत्थिता ॥ ३
तोमरादिकुठाराद्यैः सुविद्धं धारया स्रवेत् ।
दुष्टास्रं दोषलिङ्गं तत्साध्यं प्रस्थः [18]परोऽवधिः ॥ ४

1. सूरये
2. याद
3. श्र
4. सादि
5. जैन
6. वर्त
7. सान्दि
8. स्याम
9. रुचि
10. तदा
11. व्योमबाष्क
12. स्वस्थतद्युतरं
13. द्यग्वैसद्य
14. हृताः
15. व्यदः
16. कुक्षस्था
17. रुजु
18. क्रमावधेः

सशेषैश्च तृतीये वा [1]प्रमादौ तु हिमा क्रिया ।
शुद्धास्रमिन्द्रगोपाभं व्यतीतोष्णं घनं हिमम् ॥ ५
[2]प्रच्छानेनैकदेशस्थं सुप्तं शृङ्गादिभिर्हरेत् ।
ग्रन्थितं तु जलूकाभिरसृग्व्यापि सिराव्यधात् ॥ ६
[3]न योज्यं सकफे शृङ्गं सपित्तेऽलाबु चासृजि ।
जलौकसः सदा रक्तस्रावाय सुखिनां हिताः ॥ ७
न स्राव्या रक्तपित्तार्शःसूताश्च श्वासकासिनः ।
गर्भिणी वम्यतीसारे वृद्धोऽजीर्णी कृशोऽर्भकः ॥ ८
पक्षाघातोदराक्षेपपाण्डुसर्वाङ्गशोफिनः ।
कृतस्नेहादिकर्माणो नात्युष्णा[4]प्रहिमानिले ॥ ९

इति धूमगण्डूषकबलप्रतिसारणशिरोवस्तिकर्णपूरणतर्पण-
सिराविध्यध्यायः षष्ठः ॥

---

1. क
2. स्थानि
3. तं
4. अभ्र

## अथ रिष्टविज्ञानं नाम

# ॥ सप्तमोऽध्यायः ॥

### ॥ अथ दूतज्ञानम् ॥

अभ्यङ्गभोजनस्वप्नच्छेदकृद् दुष्टवाङ्मनाः ।
पितृपिण्डप्रदोऽस्वस्थपृष्टो वैद्यो न सिद्धये ॥ १
विजातिव्यङ्गनग्नस्त्रीपाशदण्डायुधोद्यताः ।
रक्तशीर्णविवर्णैकवस्त्रानिष्टाभिधायिनः ॥ २
करावमर्दी मुक्ताश्रुः केशाभ्यक्तो [1]लिखन् भुवम् ।
लोष्टकाष्ठतृणग्राही केशकक्षस्थपाणयः ॥ ३
प्लुताव्यक्तवचाः पङ्की मुण्डदीनद्रुतादयः ।
एते दूता न शस्ताः स्युस्तद्व्यस्ताः शुभसूचकाः ॥ ४
चन्द्रे वामाग्रगाः पूर्णे सूर्ये दक्षिणपृष्ठगाः ।
समौजोवर्णवाक्सिद्ध्यै पूर्वोक्तश्च चिकित्सकः ॥ ५

### ॥ इति दूतज्ञानम् ॥

### ॥ अथ शकुनापशकुनविज्ञानम् ॥

न याने सिद्धिदा व्यङ्गमुक्तकेशकषायिणः ।
पिशाचमुण्डनग्नाहि[2]कपिदान्तदुरुक्तयः ॥ १
भस्मतैलेन्धनाङ्गारपिचुतक्र[3]कुशोद्धृतिः ।
क्षुतस्खलितयुद्धास्थिपाशरिक्तघटा वृकाः ॥ २
शशौतुसरठक्रोडगोधोष्ट्रखरसैरिभाः ।
स्त्रीसंज्ञाः पक्षिणो वामाः पुंलिङ्गाख्याश्च दक्षिणाः ॥ ३
शुभाः सुरामिषच्छत्ररोचनादिनृपध्वजाः ।

---

1. लिखद्भुवः 2. जपि 3. कुषो

शस्ताः पक्षिमृगाः सव्या व्यस्ता दृष्टिबिलेशयाः ॥ ४
काकानिलवृषाः पृष्ठे प्रवेशे त्वन्यथाऽहिताः[1] ॥

॥ इति शकुनापशकुनविज्ञानम् ॥

## ॥ अथारिष्टज्ञानम् ॥

शीलदेहेन्द्रियादीनां विकृतिः स्निग्धवक्त्रता ।
ह्रीकान्तिस्मृतिहानिश्च द्वेषश्चौषधवैद्ययोः ॥ १
वामाक्षिमज्जनं जिह्वा [2]श्यामा नासा विकारिणी ।
कृष्णौ स्थानच्युतावोष्ठौ पूत्यास्यं पुष्पितं नखम् ॥ २
रक्ते [3]स्रस्ते स्रुते स्तब्धे विषमे च विलोचने ।
भ्रुवौ च विषमे युक्ते क्षीणपुष्टो व्यथास्वरः ॥ ३
दीपान्तगन्धो हृत्तेजःकर्णनादध्रुवाज्ञता ।
निद्रानाशोऽतिनिद्रा वा [4]मृत्यै ध्वाङ्क्षाश्च विद्विषः ॥ ४

॥ इत्यरिष्टज्ञानम् ॥

## ॥ अथ नाडीपरीक्षा ॥

सर्पभेकेभवद्दोषैर्नाडी वक्रचलस्थिरा ।
मिश्रैर्मिश्रगतिः स्निग्धा स्वरसा प्रयुतोद्धता ॥ (?) १
चलवक्रस्थिरां शून्यां स्थिरशून्यातिसूक्ष्मगाम् ।
चञ्चलस्थिरसूक्ष्मां वा सूक्ष्मवक्रां च वर्जयेत् ॥ २

॥ इति नाडीपरीक्षा ॥

## ॥ अथ स्वप्नारिष्टम् ॥

स्नेहाक्तस्य निशि स्वप्ने दक्षिणाशाप्रयाणकम् ।
[5]वराहमहिषव्यालगर्दभोष्ट्रादिवाहनैः ॥ १
प्रेतप्रव्रजिताश्लेषः पानं च मधुतैलयोः ।
नर्तनं पङ्कदिग्धस्य काकाद्यैः केशलुञ्चनम् ॥ २

---

1. दिश ः 3. स्रास्त श्रुते 5. वराल
2. शामा 4. मृत्वै

विवाहकरणं बन्धो रक्तस्रग्वस्त्रधारणम् ।
स्रोतसां [1]हरणं पातः पक्वमांसस्य भोजनम् ॥ ३
भवेद्यस्यौषधेऽन्ने वा क्रियमाणे विपर्ययः ।
अकस्माद्वर्णगन्धादेः स्वस्थोऽपि न स जीवति ॥ ४
जपहोमान्नदानाद्यैर्गुरुदेवप्रसादतः ।
निष्पापं रोगिणं कृत्वा वैद्यो द्राक्समुपाचरेत् ॥ ५

॥ इति रिष्टाध्यायः सप्तमः ॥

॥ इति श्रीविष्णुभट्टसुतपण्डितदामोदरविरचितायामारोग्यचिन्तामणि-
संहितायां प्रथमं सूत्रशारीराख्यस्थानम् ॥

---

1. तरणं

# अथ निदानस्थानं चिकित्सास्थानं च ।

## अथ ज्वरचिकित्सा नाम

## ॥ अष्टमोऽध्यायः ॥

क्रुद्धा वातादयः सामास्तं गृहीत्वोदरानलम् ।
रुद्ध्वा स्रोतांसि रसगास्तापयन्तो ज्वरप्रदाः ॥ १
जाड्याङ्गमर्दमन्दाग्निवमथुग्लानि[1]जृम्भणम् ।
अरुचिक्लमरोमाञ्चारतयश्च ज्वरोद्गमे ॥ २

सर्वाङ्गरुक्प्रलपनभ्रमकम्पकार्ष्ण्य-
रोमाञ्चशुष्कवमिकासविजृम्भणानि ।
स्तम्भक्षवग्रहणतृड्विरसास्यताक्ष-
वैषम्यजागरहिमान्यनिलज्वरे स्युः ॥ ३
दाहारतिभ्रान्तिमदातिसार-
तृट्स्वेदनासास्यविकारमूर्छाः ।
तिक्तास्यपीतत्ववमिप्रलाप-
शीताभिलाषाश्च भवन्ति पैत्ते[2] ॥ ४
जाड्याल्पवेगारुचिरोमहर्ष-
स्तम्भास्यमाधुर्यवमिप्रसेकाः ।
श्वेतत्वतन्द्राहिमपीनसोष्ण-
वाञ्छाः सकासश्वसनाः कफोत्थे ॥ ५

मूर्छाभङ्गारुचिभ्रान्तिदाहतृड्वमिजागराः ।
रोमाञ्चसर्वमूर्धार्तिप्रलापा वातपित्तजे ॥ ६
विबन्धपीनसश्वासकासजाड्यारुचिभ्रमाः ।
शीतपर्वशिरोभङ्गतन्द्रा वातकफात्मके ॥ ७

---

1. म्लान

दाहशीतारुचिस्तम्भस्वेदतृण्मोहवान्तयः ।
लिप्ततिक्तास्यतातन्द्राकासाः पित्तकफज्वरे ॥ ८

सन्ध्यस्थिमूर्धहृदयार्तिविदाहशैत्य-
तन्द्राभ्रमालपनजाड्यविपाकमूर्छाः ।
तृड्जागरश्वसनकासगलाङ्गसाद-
स्निग्धास्यमौनमलसङ्गमदादिचेष्टाः ॥ ९
कण्ठस्वनोऽर्तिसहिते श्रवणे च जिह्वा
दग्धा खरा च नयने स्रुतभुग्नरक्ते ।
[1]त्वङ्नासिकोष्ठमसितारुणमस्रपित्त-
वान्तिस्त्रिदोषजनिते विकलस्त्वसाध्यः ॥ १०

अभिचाराभिघाताभ्यामभिषङ्गाच्च शापतः ।
आगन्तुर्जायते दोषैर्यथास्वं तं विनिर्दिशेत् ॥ ११
साजीर्णेऽन्यज्वरे वान्तिर्लङ्घनं तु बले सदा ।
ऋतेऽनिलश्रमक्रोधशोककासक्षयोद्भवान् ॥ १२
क्षुत्तृण्मलानुलोमत्वं लाघवं साधु लङ्घिते ।
शोषतन्द्राभ्रमालपाग्निरुक्क्लमास्त्वतिलङ्घिते ॥ १३
लङ्घिताय हिता पेया दिनान्ते पाचनैः कृता ।
सविश्वधान्यमण्डो वा शाल्यन्नं मुद्गयूषिका ॥ १४
वातश्लेष्मोत्तरेऽम्बूष्णं दद्यात् पैत्ते[2] श्रृतं हिमम् ।
तृड्दाह[3] पर्पटोशीरचन्दनाब्दाम्बुविश्वजम् ॥ षडङ्गोदकम् ॥ १५
पाचनं शमनं वापि कषायं सप्तमे दिने ।
निर्वातस्थस्य कर्तव्यं स्वेदनं त्वङ्गमर्दके ॥ १६
स्तैमित्यमरुचिस्तृष्णा विदाहः सर्वपर्वरुक् ।
ग्लानिश्च मूत्रबाहुल्यं ज्वरस्यामस्य लक्षणम् ॥ १७
ज्वरवेगोऽधिकस्तृष्णा [4]प्रलापः श्वसनं भ्रमः ।
मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ॥ १८

---

1. तङ्मासिकौष्ट- 2. पैत्त्ये 3. दाहि 4. फलाशः

ज्वरेऽष्टांशावशेषः स्यात् क्वाथो द्विघ्नश्च भेषजात् ।
[1]तथा नागरधान्याकं द्वे व्याघ्र्यौ दारु पाचनम् ॥ १९

॥ सर्वज्वरेषु ॥

धात्रीद्राक्षाम्बुभूनिम्बक्वाथः स्यात् पाचनं ज्वरे ।
पैत्तिके कटुकानिम्बद्राक्षामधुकजोऽपि वा ॥ २०
बिल्वाद्यैर्घनतिक्तेन्द्रयवक्षौद्रकणादिभिः ।
पाचनं वाऽनिलाद्युत्थे ज्वरे स्यान्मिश्रजे मतम् ॥ २१
मृदौ ज्वरे लघौ देहे शिथिलेषु मलेषु च ।
पक्वं दोषं विजानीयात्तदा[2] संशमनं पिबेत् ॥ २२

॥ अथ वातज्वरे ॥

शारिवा पिप्पली द्राक्षाशतपुष्पाहरेणवः ।
[3]शालिपर्ण्यमृताद्राक्षापटोलकसमन्विताः ॥ २३
रास्नामधुकशम्याककाश्मर्यः[4] शाल्मली बला ।
क्वाथाः श्लोकार्धका वातज्वरघ्नाः स्युर्गुडान्विताः । २४
पाठापटोलदद्रुघ्न[5]शीघ्रकुष्ठरुबूकजैः ।
सविश्वकाञ्जिकैर्मूलैर्लेपो मूर्धव्यथापहः ॥ २५

॥ इति वातज्वरसंशमनम् ॥

॥ अथ पित्तजे ज्वरे ॥

पित्तज्वरं तु दुस्पर्शकिराताम्बुदपर्पटैः ।
क्वाथः पर्पटतिक्ताब्जवालकैर्वा व्यपोहति ॥ २६
क्वाथो वाऽब्दाभयाद्राक्षातिक्ताशम्याकपर्पटैः ।
गणयोर्वा सितायुक्तः शारिवोत्पलपूर्वयोः ॥ २७

॥ इति पित्तजज्वरसंशमनम् ॥

---

1. कथा
2. तथा
3. राल
4. रे
5. लामज्जमित्यर्थः

## ॥ अथ रक्तपित्तज्वरे ॥

तिक्तायवासभूनिम्ब[1]श्यामापर्पटवासकैः ।
शृतं जलं सितायुक्तं रक्तपित्तज्वरं जयेत् ॥ २८
कोमलामलधान्याम्लाद्बदरीफलफेनतः ।
सर्पिर्भृष्टामलक्यम्लात् त्रिभ्यो लेपोऽङ्गदाहहृत् ॥ २९
दाडिमं बदरं लोध्रं दधित्थं बीजपूरकम् ।
पिष्ट्वा मूर्ध्नि प्रलेपोऽयं पिपासादाहनाशनः ॥ ३०

॥ इति रक्तपित्तज्वरसंशमनम् ॥

## ॥ अथ श्लेष्मज्वरे ॥

तिक्ताहरीतकीचव्यादेवदारुनिशाः समाः ।
नागरातिविषाकुष्ठदारुदुस्पर्शमुस्तकाः ॥ ३१
शुण्ठीदुरालभावासामुस्तकेन समन्विताः ।
श्लोकार्धनिर्मिता योगास्त्रयः श्लेष्मज्वरापहाः ॥ ३२

॥ इति श्लेष्मज्वरसंशमनम् ॥

## ॥ अथ द्वन्द्वज्वरे ॥

त्रिफलाशाल्मलीरास्नाराजवृक्षाटरूषकैः ।
क्वाथोऽल्पपञ्चमूलाढ्यो वातपित्तज्वरापहः ॥ ३३
कटुकाब्दवचाभार्ङ्गीदारुपर्पटधान्यकैः ।
साभयाविश्वभूतिक्तैः क्वाथो हिङ्गुमधूत्कटः ॥ ३४
पीतो वातकफोद्भूतज्वरश्वासगलग्रहान् ।
कासहिक्काप्रतिश्यायप्रसेकांश्च द्रुतं हरेत् ॥ ३५
सुरसार्जकाशभूणां शुक्तैर्लेपोऽतिशीतहा ।
दारुणाऽगुरुणा धूपः सल्लकीस्वरसेन वा ॥ ३६
निशाद्वयाम्बुदोशीर[2]मृद्वीकारग्वधोद्भवः ।
निर्यूहः कफपित्तोत्थं ज्वरं क्षिप्रमपोहति ॥ ३७

॥ इति द्वन्द्वज्वरसंशमनम् ॥

---

1. शामा    2. मृद्वीकारग्व[illegible]

## ॥ अथ त्रिदोषे ॥

दोषस्यैकस्य संवृद्ध्या शमनेनोच्छ्रितस्य वा ।
श्लेष्मस्थानानुवृत्त्या वा ज्वरं हन्यात् त्रिदोषजम् ॥ ३८
माक्षिकाढ्यः[1] कषायो यः कफपित्तज्वरान्तकृत् ।
यष्टिच्छिन्नाबलारिष्टपटोलत्रिफलोद्भवः ॥ ३९
क्षुद्राविश्वौषधच्छिन्नापुष्कराणां कषायकः ।
सश्वासारुचिरुक्कासं सन्निपातज्वरं जयेत् ॥ ४०
व्योषाब्दत्रिफलातिक्तापटोलारिष्टवत्सकैः ।
सभूनिम्बामृतापाठैस्त्रिदोषज्वरहृच्छृतम्[2] ॥ ४१
तस्यान्ते कर्णमूले स्याच्छोफः[3] कृच्छ्रप्रतिक्रियः ।
तं जयेच्छोणितस्रावघृतपानप्रलेपनैः ॥ ४२
शोषणोऽर्कजटाक्वाथः शैत्ये स्वेदः कणोद्भवः ।
यवानीतृणकोग्राभिर्भस्मना वाऽवकुण्ठनम् ॥ ४३

॥ इति त्रिदोषसंशमनम् ॥

## ॥ अथाभिन्यासे ॥

[4]प्राणायतनगैर्दोषैरभिन्यासो विसंज्ञकः ।
प्रत्याख्येयो नृपगिरा द्रुतं साध्यो [5]विशारदैः ॥ ४४
घ्राणास्ययोस्त्रिकटुकं हिङ्गुस्तन्ये च कर्णयोः ।
नेत्रयोः सिन्धुगोमूत्रं वचात्रिकटुकं न्यसेत् ॥ ४५
मधूकसारयुक्तं स्यान्नस्यं संज्ञाप्रबोधने ।
व्यर्थेऽस्मिन् कुशलैर्दाहः कार्यः पार्ष्ण्यादिमर्मसु ॥ ४६
व्याघ्रीदुरालभाभार्ङ्गीशृङ्गी[6]कचोरपौष्करैः ।
पक्वाम्बु श्लेष्महृत्पेयमभिन्यासप्रशान्तये ॥ ४७

---

1. आद्य
2. ज्वरम्
3. शोप
4. प्रणाथितरगैः
5. तुसारदैः ।
6. कच्चूर

॥ अष्टादशकः ॥

दशमूलीशटीशृङ्गीभार्ङ्गीन्द्रयवपौष्करैः ।
वासातिक्तापटोलाख्यैः काथोऽभिन्यासहृत्परः ॥ ४८

॥ द्वितीयाष्टादशकः ॥

भूनिम्बदारुदशमूलमहौषधाब्द-
तिक्तेन्द्रबीज[1]धनिकेभ[2]कणाकषायः ।
तन्द्राप्रलापकसनारुचिदाहमोह-
श्वासान्वितं तृषमपि ज्वरमाशु हन्ति ॥ ४९

॥ अष्टाङ्गावलेहः ॥

कारवी[3]कट्फलव्योषशृङ्गीपुष्करवासकैः ।
लेहः सान्द्रद्रवैर्हिक्काश्वासाभिन्यासहृत्परः ॥ ५०

॥ असाध्यलक्षणम् ॥

[4]कृष्णोष्ठः पिच्छिलस्वेदः सान्तर्दाहादिशीतवान् ।
सोच्छ्वास[5]भ्रान्तदृक् क्षीणो वक्रोष्ठास्यः क्लमान्वितः ॥ ५१
सहिक्काश्वासतृण्मूढः सरोमाञ्चोऽरुणेक्षणः ।
मोही रोषी विचेष्टी वा ज्वरितो द्राग्विनश्यति ॥ ५२

स बाध्यमानो हृदि नाभिदेशे
गात्रेषु वा पाकसमुत्थितेषु ।
पक्वेष्ववावैशिरुजं (?) ज्वरार्तः
सदा तु पाकी म्रियते त्रिदोषी ॥ ५३

पित्तकफानिलवृद्ध्या
दशदिवसद्वादशाहसप्ताहात् ।
हन्ति विमुञ्चति वा स
त्रिदोषजो धातुमलपाकात् ॥ ५४

॥ इत्यभिन्यासः ॥

---

1. दनिके
2. कृतः
3. कल्पल
4. कुष्ठोष्ठ
5. सोच्छ्वात

## ॥ अथ भूतज्वरः ॥

दोषैर्धातुगतैर्भूतसङ्गाद्वा विषमज्वरः ।
सततं योऽनुषङ्गी स्यात्सन्ततः स निगद्यते ॥ ५५
अहोरात्रं सततो यो द्वौ कालावनुवर्तते ।
अन्येद्युष्क[1]स्त्वहोरात्र एककालं प्रवर्तते ॥ ५६
तृतीयकस्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थकः ।
रक्तस्रावस्तयो[2]रंसमध्याधःस्कन्धयोः क्रमात् ॥ ५७
निम्बामृताभयाद्राक्षापटोलेन्द्रयवाः समाः ।
त्रायन्तीकटुकापाठाशारिबाद्वययोजिताः ॥ ५८
पटोलारिष्टमृद्वीकाशम्याकत्रिफलाऽमृताः ।
चन्दनोशीरधान्याब्दगुळूचीविश्वभेषजम् ॥ ५९
देवदारु स्थिरा शुण्ठी वासा धात्री हरीतकी ।
घ्नन्ति पञ्च ज्वरान् पञ्च क्वाथा मधुसितोत्कटाः ॥ ६०
मुस्ताऽऽर्द्रामलकच्छिन्नाक्षुद्राक्वाथः कणायुतः ।
समधु[3]र्विषमं हन्याज्ज्वरं सर्वभवं द्रुतम् ॥ ६१
पथ्याजाजिगुडा भोज्या विषमज्वरशान्तये ।
धूपो गुग्गुलुघूकोत्थपक्ष[4]कर्षाम्बरैस्तथा ॥ ६२
वामनाड्यां तथा नस्यं विश्वापामार्गकाञ्जिकैः ।
भौमार्कोन्मिश्रितं मूलं स्थूलपुष्पस्य वा द्रुतम् ॥ ६३
नस्यं शीतज्वरघ्नं स्यात्तुळसी मरिचाम्बुना ।
अरिष्टमरिचाभ्यां वा कार्पासास्थ्यादिधूपनम् ॥ ६४
तुळसी लाङ्गली तिक्ता गुडूचीपुरचोरकाः ।
सहदेवीवचायुक्ताः शीतघ्ना लेपधूपनैः ॥ ६५
एतैरेवौषधैः पिष्टैर्लवणक्षारसंयुतैः ।
साम्लैर्विपाचितं तैलमभ्यङ्गाच्छीतनाशनम् ॥ ६६

---

1. यहो रात्रामे
2. कार्यो मद्यद्यः
3. मद्रु
4. कुषाम्बुरैः

सुवर्चिका नागरकुष्ठमूर्वा-
लाक्षानिशालोहितयष्टिकाभिः ।
तैलं ज्वरे षड्गुणतक्रसिद्ध-
मभ्यङ्गनाच्छीतविदाहनुत्स्यात् ॥ ६७
क्वाथोऽत्युष्णज्वरघ्नः स्यात्ससितक्षीरधान्यजः ।
हिमेन्दुशीरदूर्वाब्दकदम्बाद्यास्तथा हिताः । ६८
क्षीरेण त्रिफलां कृष्णां गोमयाम्बु पृथक् पिबेत् ॥
पिप्पलीवर्धमानं वा विषमज्वरपीडितः ॥ ६९

॥ इति भूतज्वरः ॥

## ॥ अथ सामान्यचिकित्सा ॥

कार्यः पक्वामकोष्ठस्य विरेको बलिनः शनैः ।
घृतभृष्टकणापथ्यासैन्धवैः सोष्णवारिभिः ॥ ७०
मधुकारग्वधद्राक्षातिक्तापाठाफलत्रिकैः ।
सपटोलैर्जलं भेदि ज्वरनुत्सिन्धुसंयुतम् ॥ ७१
आरग्वधाभयातिक्ताग्रन्थिकाब्दकषायकः ।
दीपनः पाचनो भेदी सामशूलज्वरापहः ॥ ७२
मुस्तकत्रिफलाकृष्णात्रिवृच्छ्यामासिता मधु ।
सन्निपातज्वरं शोफं रक्तपित्तं निरस्यति ॥ ७३
[1]निदिग्धिकाऽमृताशुण्ठीक्वाथः कृष्णान्वितोऽग्निकृत् ।
जीर्णज्वरारुचिश्वासकासहृत्कफ[2]शूलहृत् ॥ ७४
जीर्णे ज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम् ।
तदेव तरुणे पीतं विषवद्धन्ति मानवम् ॥ ७५
पञ्चमूलैः शृतं क्षीरं चतुर्गुणजलेन वा ।
शिंशपैरण्डकैर्वाऽपि धारोष्णं वा ज्वरापहम् ॥ ७६
साधितं बिल्वगर्भेण मूलैरेरण्डकस्य वा ।
सद्यो हन्ति पयः पीतं ज्वरं सपरिवर्तकम् ॥ ७७

---
1. निधि 2. काम

सक्षारपञ्चकोलस्य [1]पलैः षड्भिर्जलाढके ।
घृतप्रस्थं शृतं प्लीहविषमज्वरगुल्मनुत् ॥ ७८

॥ पञ्चसारपयः ॥

पिप्पलीशर्कराद्राक्षाघृतमिश्रं पयः शृतम् ।
पञ्चसारं हि पातव्यं ज्वरकासक्षयापहम् ॥ ७९

॥ वासाघृतम् ॥

वृषस्य क्काथकल्काभ्यां सर्पिः पक्वं समाक्षिकम् ।
पानात् क्षयज्वरश्वासकासपाण्डुवस्रापित्तजित् ॥ ८०

॥ धूपप्रलेपादि ॥

सहदेवीवचादारुधात्रीभिः संप्रधूपनम् ।
प्रलेपोद्वर्तने कुर्यादेभिर्वा ज्वरशान्तये ॥ ८१
पुरश्यामावचासर्जनिम्बार्कागरुदारुभिः ।
सर्वज्वरहरो धूपः कार्योऽयमपराजितः ॥ ८२

॥ लाक्षातैलम् ॥

लाक्षारससमं तैलं चतुर्गुणितमस्तुनि ।
अश्वगन्धानिशादारुकौन्तीकुष्ठाब्दचन्दनैः ॥ ८३
समूर्वाकटुकीरास्नाशताह्वामधुकैर्युतम् ।
सिद्धं लाक्षादिकं नाम तैलमभ्यङ्गनादिकैः ॥ ८४
सर्वज्वरक्षयोन्मादश्वासापस्मारवातनुत् ।
यक्षराक्षसभूतघ्नं गर्भिणीसूतिकाहितम् ॥ ८५

॥ इति सामान्यचिकित्सा ॥

॥ हिताहाराः ॥

शालयः षष्टिका मुद्गा मसूराश्चणकाः शुभाः ।
पटोलपत्रवार्ताककर्कोटादीनि च ज्वरे ॥ ८६

---

1. फलैः

॥ ज्वरमोक्षलक्षणम् ॥

दाहः स्वेदो भ्रमस्तृष्णा कम्पविड्भेद[1]मूर्छितम् ।
कूजनं चास्यवैगन्ध्यमाध्मानं ज्वरमोक्षणे ॥ ८७

॥ ज्वरमुक्तलक्षणम् ॥

शिरःकण्डूस्तथा काङ्क्षा जायते लाघवं क्षवः ।
प्रस्वेदो निर्मला दृष्टिर्ज्वरमुक्तस्य लक्षणम् ॥ ८८

॥ अथ ज्वरातिसारे ॥

ज्वरितेऽथाङ्गमर्दश्च प्रतिश्यायशिरोरुजः ।
आध्मानं स्रंसनं फेनमशब्दं गुरुवेदनम् ॥ ८९
कृच्छ्रसाध्यमिदं विद्याज्ज्वरातीसारलक्षणम् ।
नागराब्दविषाच्छिन्नाभूनिम्बकुटजैः कृतः ॥ ९०
क्वाथः सर्वज्वरघ्नः स्यात्सर्वातीसारहृत्परः ।
बिल्वनागबलामुस्तातिविषाकुटजं पिबेत् ॥ ९१
पानीयपेषितं सामज्वरशूलातिसारनुत् ।

॥ इति ज्वराध्यायोऽष्टमः समाप्तः ॥

1. साशता:

## अथ अतिसारादिप्रतिषेधो नाम

# ॥ नवमोऽध्यायः ॥

### ॥ अथातिसारः ॥

विरुद्धातिगुरुस्निग्धरूक्षोष्णात्यशनादिभिः ।
[1]हत्वाऽग्निमुद्धता दोषास्त्वतिसारं प्रकुर्वते ॥ १
अरुणं फेनिलं रूक्षं सशूलाल्पं मुहुर्मुहुः ।
सामं सशब्दं पक्वं वा [2]मारुतेनातिसार्यते ॥ २
पीतरक्तासितं नीलं दुर्गन्धि हरितं द्रवम् ।
सदाहपाकतृण्मूर्छं शकृत्पित्तात् प्रवर्तते ॥ ३
श्वेतं विस्रं घनं स्निग्धं शीतलं मन्दवेदनम् ।
गौरवारुचिहृल्लासैः सार्यते श्लेष्मणा शकृत् ॥ ४
वराहस्नेहमांसाम्बुसदृशं सर्वरूपिणम् ।
कृच्छ्रसाध्यमतीसारं विद्याद्दोषत्रयोद्भवम् ॥ ५
स्तोकं स्तोकं विबद्धं[3] वा सशूलं योऽतिसारयेत् ।
अभयापिप्पलीकल्कैः सुखोष्णैस्तं विरेचयेत् ॥ ६
क्षौद्रस्नेहदधिक्षीरवेशवारोपमं शकृत् ।
नानावर्णोत्कटं पूति चन्द्रिकाढ्यं न सिध्यति ॥ ७
शोफकासज्वरश्वासहिक्काध्मानवमिक्लमैः ।
तृड्वातशूलशैत्यैश्च क्षीणश्चाज्यातिसारवान् ॥ ८
वातवद्भयशोकोत्थौ साध्यौ शाकाशनौषधैः ।
अतिसारा द्विधा ज्ञेयाः सर्वे पक्वामभेदतः ॥ ९

---

1. मत्वा 2. मानु 3. विबन्धो

## ॥ आमातिसारः ॥

सजाड्यानाहदौर्गन्ध्य[1]च्छिन्नं चाप्सु निमज्जति ।
[2]तत्स्यात्सामं शकृत्सार्यं [3]पक्वं संस्तभ्यमन्यथा ॥ १०
तत्रामे वमनं कार्यं लङ्घनं च यथाबलम् ।
विश्वोदीच्योदकं[4] पेयं पक्वं कृष्णादिजं लघु ॥ ११
धान्यविश्वघनोदीच्यबिल्वक्वथेन पाचनम् ।
जाड्यानाहार्तिरोधघ्नं[5] तत्पैत्ते[6] विश्ववर्जितम् ॥ धान्यपञ्चकम् ॥ १२
त्र्यूषणातिविषाहिङ्गुवचासौवर्चलाभयाः ।
पीताः कोष्णाम्भसा हन्युरामातीसारमुद्धतम् ॥ १३
बिल्वगोक्षुरकैरण्डयवकाञ्जीकसाधिता ।
आमातिसारशूलघ्नी मधुयुक्ता हरीतकी ॥ १४

## ॥ अथ वातातिसारः ॥

समङ्गाशाल्मलीवृन्तं[7] लोध्रं पाठा सधातकी ।
फलिनी पद्ममाम्रास्थि तिरीटं पक्वबिल्वकम् ॥ १५
आम्रास्थि दाडिमं लोध्रं धातकी कण्टकारिका ।
पक्ववातातिसारघ्नास्त्रयः सक्षौद्रतण्डुलाः ॥ १६

॥ इति वातातिसारः ॥

## ॥ अथ पित्तातिसारः ॥

उत्पलं धातकीपुष्पं शुण्ठीदाडिमबिल्वजम् ।
पाठादुरालभाविश्वमाम्रजम्ब्वस्थि[8]कट्फलम् ॥ १७
धातक्यतिविषाविश्वत्वक्फलताक्ष्र्यजम् ।
चूतास्थिधातकीपुष्पसमङ्गं ससरोरुहम् ॥ १८

---

1. रोदाप्सु
2. कत् स्यात्
3. पक्वाया
4. उदको
5. रोद
6. पत्त्यो
7. वृंतं
8. कत्फिलम्

योगाः श्लोकार्धविच्छेदाश्चत्वारो मधुयोजिताः ।
तण्डुलाम्बुयुताः पक्वपित्तातीसारनाशनाः ॥ १९

॥ इति पित्तातिसारः ॥

## ॥ अथ रक्तातिसारः ॥

क्रुद्धं पित्तं प्रदूष्यास्रं रक्तातीसारकृद्भवेत् ।
आजं पयः प्रयोक्तव्यं तत्र भोजनपानयोः ॥ २०
पयस्या शारिबा लोध्रशर्करामधुयष्टिकाः ।
शीतेन पयसा पीताः सक्षौद्रा रक्तनाशनाः ॥ २१
सल्लकी बदरी जम्बूप्रियालाम्रार्जुनत्वचः ।
पीताः क्षीरेण मध्वाढ्याः पृथक्छोणितनाशनाः ॥ २२
सशर्करान्वितो रालः शर्कराऽऽढ्या हरीतकी ।
सन्ततं तत्र जन्तूनां रक्तातीसारजि[1]द्भवेत् ॥ २३
चन्दनस्य प्रियङ्गोर्वा कल्कं सक्षौद्रशर्करम् ।
बोळं तण्डुलतोयेन पीतं रक्त[2]स्रुतिं जयेत् ॥ २४
व्यत्यासेन शकृद्रक्तं सार्यमाणं विरेचयेत् ।
क्षीरेण त्रिफलाऽऽढ्येन युक्त्याऽल्पान्यतमेन वा ॥ २५

॥ इति रक्तातिसारः ॥

## ॥ अथ श्लेष्मातिसारः ॥

पूतिकव्योषबिल्वाम्लतक्रदाडिमहिङ्गुभिः ।
भोजयेत्साधितै[3]र्यूषैः पक्वश्लेष्मातिसारिणम् ॥ २६
सचव्यातिविषा कृष्णा[4]पाठा कटुकरोहिणी ।
पिप्पलीपिप्पलीमूलगजमागधिका[5]त्रयः ॥ २७
कृमिशत्रुवचादारुदीप्यकं वा सभूस्तृणम् ।
योगाः श्लेष्मातिसारघ्नाः श्लोकार्धैर्दीपनास्त्रयः ॥ २८

---

1. चित्
2. स्तुतिं
3. संसितैः
4. कष्टा
5. मागदिका

पथ्याऽग्निकटुकापाठावचाग्रन्थिकवत्सकैः ।
सनागरैर्जयेत्क्वाथः कल्को वा श्लैष्मिकीं सृतिम् ॥ २९

॥ इति श्लेष्मातिसारः ॥

## ॥ सामान्योपायाः ॥

मुस्तेन्द्रयवबिल्वान्तर्धातकीलोध्रमोचजाः ।
पीता रुन्धन्त्यतीसारं [1]गुडशक्रेण दुर्जयम् ॥ ३०
वत्सकातिविषाबिल्वविश्वोदीच्यैः[2] कषायकः ।
पीनसं रक्तशूलाममतिसारं जयेद् ध्रुवम् ॥ ३१
कुटजस्य पुनः क्वाथोऽतिविषाढ्योऽतिसारजित् ।
मूलं नागबलाया वा सतक्रो वा वटाङ्कुरः ॥ ३२

## ॥ कुटजाष्टकम् ॥

द्रुमस्य त्वक्तुलाक्वाथं पाठालोध्राब्द[3]मोचजैः ।
धातक्यतिविषाबिल्वैः पालिकैः पाचितं घृतम् ॥ ३३
पिबेत् क्षौद्रतुषाम्बुभ्यां दुष्टातीसारनाशनम् ।
सर्वासृग्दर[4]रक्तार्शःपित्तासृग्ग्रहणीहरम् ॥ ३४

## ॥ पुटपाकः ॥

त्वक्कौटजी तण्डुलवारिपिष्टा
जम्बूदलस्था कुशपङ्कबद्धा[5] ।
पुटे सुपक्वा मधुयुग्रसोऽस्याः
सर्वातिसारं विषमं हरेद् द्राक् ॥ ३५

## ॥ कपित्थाष्टकम् ॥

चातुर्जातकदीप्यविश्वमरिचग्रन्थ्यग्निसौवर्चला
जातीधान्यजलं समं सृतिहरं[6] खण्डं कपित्थाष्टकम् ।

---

1. गुडु
2. उदेच्छैः
3. लब्धाब्ध
4. धर
5. दाब्दा
6. सवत्त्रसहरं

## ॥ दाडिमाष्टकम् ॥

त्र्यंशं धातकिलोध्रबिल्वचपलावृक्षाम्लकै[1]र्दाडिमं
स्याद्रुच्यं ग्रहणीक्षयाग्निसदनातीसारकासापहम् ॥ ३६
शाणो [2]वांशी द्वौ चतुर्जातकाख्याद्
[3]व्योषाजाजीग्रन्थिदीप्यात्समं[4] स्यात् ।
अष्टौ कर्षा दाडिमात् [5]खण्डतोऽष्टौ
चूर्णं तुल्यं स्यात्कपित्थाष्टकेन ॥ ३७

॥ इत्यतिसारः ॥

## ॥ अथ ग्रहणीप्रवाहिका ॥

सुते रक्ते पुरीषे च वायुना विड्विवर्जिता ।
[6]प्रवाहिकेति विख्याता या फेनाभा प्रवर्तते ॥ १
पयसा पिप्पलीकल्कः पीतो वा मरिचोद्भवः ।
त्र्यहात्प्रवाहिकां हन्याच्चिरकालानुबन्धिनीम् ॥ २
धातकीबदरीपत्रकपित्थरसमाक्षिकम् ।
सलोध्रं सयुतं दध्ना पिबेयुर्वाहिका[7]र्दिताः ॥ ३
बिल्वगर्भं गुडं लोध्रं तैलं मरिचकान्वितम् ।
लीढ्वा निर्वाहिकाक्रान्तः क्षिप्रं सुखमवाप्नुयात् ॥ ४
बिल्वाग्निद्रुमचिभ्रंशवान्तिकर्णस्वनभ्रमाः । (?)
विडग्रहानाहरुक्कम्पग्रहण्यांजा [वा]तिसारवत् ॥ (?) ५
शुण्ठीमुस्ताविषाच्छिन्न.क्वाथः स्यादामपाचनः ।
दीपनश्च ग्रहण्यां च पाचनं धान्यपञ्चकम् ॥ ६
त्रिफला[8]पुष्करव्योषैर्लवणत्रयमादहेत् ।
तत्पीतं सर्पिषा वातग्रहणीगुल्मशूलनुत् ॥ ७

---

1. अम्लसद्
2. शोणौ वांशौ
3. द्वेष
4. सदा
5. क्षड
6. निर्वाहितेति
7. °वाहिता
8. पुष्कल

॥ हिङ्ग्वष्टकम् ॥

दीप्यकं व्योषसिन्धूत्थं जीरकद्वयहिङ्गुकम् ।
साज्यग्रासान्वितं चूर्णं सामवातनुदग्निकृत् ॥ ८

॥ चित्रकादिगुटिका ॥

पञ्चकोलोषणे क्षारौ दीप्यहिङ्गुपटूनि च ।
लुङ्गाद्भिर्दाडिमाद्भिर्वा भावितं दीपनं परम् ॥ ९

॥ नागरादि चूर्णम् ॥

नागरं पिप्पली पथ्या द्राक्षाबिडसुवर्चलाः ।
साजमोदाः सदा घ्नन्ति ग्रहण्युत्थवाससामजान् ॥ १०

॥ द्वितीयं नागरादि ॥

नागरातिविषाबिल्वमुस्तकत्वकफलाम्बुदान् ।
सपाठाधातकीतिक्तान् साजाजींश्चूर्णितान् पिबेत् ॥ ११
सक्षौद्रान् [1]ज्येष्ठतोयेन पैत्तिकग्रहणीगदे ।
अर्शःप्रवाहिकारक्तकुक्षिरोगगुदार्तिषु ॥ १२

॥ शट्यादि चूर्णम् ॥

शटिव्योषाभयाः क्षारौ ग्रन्थिकं बीजपूरकम् ।
लवणोष्णाम्बुना पेयं श्लैष्मिके ग्रहणीगदे ॥ १३

॥ भूनिम्बादिचूर्णम् ॥

समा भूनिम्बतिक्ताब्दव्योषांशा द्वौ च वह्निजौ ।
षोडशांशं वत्सकत्वक् चूर्णमेतद् गुडाम्बुना ॥ १४
पीतं स्याद् ग्रहणीदोषकामलापाण्डुरोगनुत् ।
प्रमेहारुच्यतीसारकासशोफज्वरापहम् ॥ १५

॥ ग्रन्थिकादितक्रम् ॥

ग्रन्थिकाग्न्यभयाकृष्णात्वङ्गात्वक्वटे स्थितात् ।
दध्नस्तक्रं ग्रहण्यर्शःकासगुल्मकृमीरणम् ॥ १६

1. शाल्मलीत्यर्थः ।

## ॥ चाङ्गेरीघृतम् ॥

विश्वग्रन्थिककृष्णाऽग्निपाठागोक्षुरधान्यकैः ।
शठी[1]कारिकणाबिल्वैः पक्वं दध्नि चतुर्गुणे ॥
चाङ्गेरीद्रवतुल्याज्यं ग्रहण्यर्शःप्रवाहिकाः ।
कृच्छ्रानाहगुदभ्रंशशूलानिलकफान् जयेत् ॥ १८

## ॥ पथ्यनिरूपणम् ॥

दीपनान्यन्नपानानि चूर्णानि च घृतानि च ।
प्रविभज्य यथाऽवस्थं योजयेद् ग्रहणीगदे ॥ १९

॥ इति ग्रहणीप्रवाहिकाचिकित्सा ॥

## ॥ अथ कृमिरोगचिकित्सितम् ॥

ज्वरो विवर्णता शूलं हृद्रोगश्छर्दनं भ्रमः ।
भक्तद्वेषोऽतिसारश्च सञ्जातकृमिलक्षणम् ॥ १
शिग्रुदार्व्याखुकर्ण्यब्द[2]त्रिफलाभिः शृतं जलम् ।
कृष्णाविडङ्गचूर्णाढ्यं पिबेत्कृमिनिवारणम् ॥ २
विडङ्गं पारिभद्राग्रं पद्मबीजं पृथक् पिबेत् ।
मधुना कृमिनाशाय निम्बं वा हिङ्गुना युतम् ॥ ३
गुडयुक्तां पिबेच्चोरयवानीं कृमिपातने ।
खादेद् द्राङ् मूलकन्दाख्यान् भल्लातान् वाऽम्लिकायुतान् ॥ ४
अजमोदाविडङ्गाखुकर्णीपिष्टकपूपकाः ।
साज्याः सौवीरकं चानु पिबेत् कृमिनिवृत्तये ॥ ५

॥ इत्यतिसारग्रहणीकृमिनिवारणाख्यो नवमोऽध्यायः समाप्तः ॥

---

1. शटियोष 2. अब्ध

अथार्शोरोगचिकित्सितं नाम

## ॥ दशमोऽध्यायः ॥

पृथग्दोषैः समस्तैश्च शोणितात्सहजादपि ।
[1]षोढाऽर्शांसि गुदे चर्मकीलाभानि वलित्रये ॥ १
अरोचकाग्निवैषम्य[2]सक्थिसादान्त्रकूजनम् ।
अम्लोद्गारशकृद्रोधविस्फोटास्तेषु पूर्वजाः ॥ २
[3]कटीपृष्ठोरसां शूलं प्लीहगुल्मादिसंभवः ।
ग्रहणीपाण्डुरोगाद्या जायन्ते वाऽपि तैर्गदाः ॥ ३
म्लानशुष्कारुणश्यावरूक्षाणि विषमाणि च ।
सर्ववातविकाराणि विद्यादर्शांसि मारुतात् ॥ ४
पित्तात् पित्तविकाराणि रक्त[4]पीतानि तानि च ।
स्पर्शासहमृदून्यस्रस्रवाणि क्लेदवन्ति च ॥ ५
शीतपाण्डुस्थिरस्निग्धपिच्छिलानि बलासतः ।
महान्ति स्तब्धगुप्तानि कफामयकराणि च ॥ ६
सर्वैः सर्वात्मकान्याहुर्लक्षणैः सहजानि च ।
रक्तानि रक्तवाहीनि रक्तजानि विनिर्दिशेत् ॥ ७
छर्दिमोहाङ्गरुक्तृष्णाज्वरहृद्बस्तिशूलिनम् ।
पाकशोफारुचिक्षीणं त्यजेदर्शस्विनं भिषक् ॥ ८
स्वेदो गोमयपिण्डेन सक्तुना पायसेन[5] वा ।
शतपुष्पेण वा कार्योऽभ्यज्य कोष्णाम्बुसेचनम् ॥ ९
असिताहिबिडालोष्ट्रक्रोडजम्बुकजा वसाः ।
धूपनेऽभ्यञ्जने योज्या गुदजानां निवृत्तये ॥ १०

1. षोडशांशि
2. शक्ति
3. कजि
4. पितानि
5. वायसन

गोमूत्रस्वर्जिकादन्तिलाङ्गलीचित्रमूलिकैः ।
कृष्णाशिरीषबीजार्कक्षीरैः सामयसैन्धवैः ॥ ११
हरिद्रादक्षाविड्गुञ्जागोमूत्रैः पिप्पलीयुतैः ।
एतल्लेपत्रयं योज्यं शीघ्रमर्शोविनाशनम् ॥ १२
[1]दन्त्यश्वमारकासीसविडङ्गैलाग्निसैन्धवैः ।
सार्कक्षीरश्रृतं तैलमभ्यङ्गात्पायुकीलनुत् ॥ १३
लेपः स्नुक्क्षीररात्रिभ्यां बन्धस्तल्लिप्ततन्तुना ।
देवदाल्यम्बुना शौचं सदाऽद्यात्सगुडां शिवाम् ॥ १४
नागस्य नळिकां सिन्धुघृताक्तां निक्षिपेद् गुदे ।
चित्रकं सैन्धवं शुण्ठीं पिष्ट्वा तक्रेण पाययेत् ॥ १५
[2]चित्रकाक्ते घटे तक्रं संजातं दधि वा पिबेत् ।
चव्याचित्रकसंयुक्तमर्शोघ्नं शीलयेद्दधि ॥ १६
सैन्धवद्विगुणं दन्तिभल्लाताग्निफलत्रिकम् ।
शरावसंपुटे [3]दग्धमश्नीयाद् गुदजामयी ॥ १७

॥ सूरणवटकम् ॥

कृष्णामरीचविश्वाग्निसूरणैर्द्विगुणोत्तरैः ।
सगुडै[4]र्गुटिकाऽर्शोघ्नी कार्श्यमन्दाग्निगुल्मनुत् ॥ १८

॥ द्वितीयं सूरणवटकम् ॥

[5]द्विपलं सूरणं वृद्धो मुशल्याश्चित्रकात्पलम् ।
बिल्वभल्लाततालीसविश्वग्रन्थिवराकणाः ॥ १९
त्र्यक्षांशाः [6]कार्षिका भृङ्गोषणैला द्विगुणो गुडः ।
मन्दाग्न्यर्शःक्षयप्लीहग्रहणीमेहशोफनुत् ॥ २०

॥ काङ्कयनवटकम् ॥

कृष्णाग्रन्थिकचव्याग्निपथ्याः कर्षाभिवर्धिताः ।
जीरकान्मरिचाच्चाक्षः क्षाराद् द्वे पञ्च नागरात् ॥ २१

---

1. दन्त्यश्व 3. पक्वं 5. सूरणाद्वृद्धादध्यर्धि
2. चिताकाख्ये 4. घुटिका 6. कार्शिकाभ्यङ्ग

[1]कन्दात् षोडश भल्लातादष्टौ षण्णवतिर्गुडात् ।
एषां काङ्कायनाख्यांश्च वटकान् कर्षसंमितान् ॥ २२
कुल्यैकं भक्षयेत्प्रातस्तक्रमम्भोऽनु वा पिबेत् ।
मन्दाग्निग्रहणीपाण्डुसर्वार्शोनाशनं परम् ॥ २३

॥ कुटजावलेहः ॥

कुटजस्य जलद्रोणे कषायोऽष्टांशशेषितः ।
रसाञ्जनाग्निभल्लातबेल्लव्योषवरापलैः ॥ २४
त्रिंशत्पलगुडैर्लेह्या[2] वचाविश्व[3]यवाङ्ययुक् ।
लेहश्च सर्वदुर्नामपाण्डुमेहातिसारनुत् ॥ २५

॥ पलाशक्षारघृतम् ॥

व्योषगर्भं पलाशस्य त्रिगुणे भस्मवारिणि ।
साधितं पिबतः सर्पिः सर्वार्शःपातनं भवेत् ॥ २६

॥ अतिदेशविधिः ॥

वातातिसारवद्भिन्नवर्चस्यर्श[4]स्युपाचरेत् ।
उदावर्तविधानेन [5]गाढविट्कानि चासकृत् ॥ २७

॥ रक्तार्शसि ॥

उशीरारिष्टदार्वीत्वक्क्राथः स्याच्छोणितार्शसाम् ।
शुण्ठीचन्दनभूनिम्बधन्वयासभवोऽथ वा ॥ २८
[6]वृक्षकस्य त्वचं बीजं तार्क्ष्याजाजीविषं मधु ।
पिबेत्तण्डुलतोयेन दुर्नामास्रार्तिशोषनुत् ॥ २९
बोळकेसरखण्डैर्वा तिलैर्वा नवनीतकम् ।
किञ्जल्कमाक्षिकाभ्यां वा लेह्यमर्शोविनाशनम् ॥ ३०
कळिङ्गधातकीलोध्रकेसरोत्पलवत्सकैः ।
सिद्धं जले घृतं [7]रक्तस्रावार्शःशूलशान्तये ॥ ३१

---

1. कन्दात्षोडश
2. चाढ्यो
3. पलाज्य
4. अर्चसि
5. गुड
6. वृषकस्य
7. स्त्र

॥ प्राणदवटकः ॥

ताळिसोषणचव्याक्षो व्यक्षे ग्रन्थिकणे तथा ।
त्र्यक्षाः पथ्याश्चतुर्जातः कर्षः स्याच्छ्लक्ष्णचूर्णितात् ॥
सिता [1]त्रिगुणिता देया प्राणदा वटकीकृता ।
स्वान्यर्शोविड्ग्रहाल्पाग्निकासमेहाम्लपित्तनुत् ॥

॥ लेपयोगः ॥

शिरीषहलिनीलेपो नाभितश्चतुरङ्गुले ।
समन्ताद्विहितोऽर्शांसि सप्तरात्रेण पातयेत् ॥
निशासूरणदण्डाग्नित्रि[2]क्षारामयजोऽथ वा ।
सचूर्णोऽर्शःप्रलेपेन भिन्द्यान्मांसाङ्कुरान् बहिः ॥

॥ वर्ज्यानि ॥

दुर्नाम्नि त्याज्यमश्वाद्यं कठिनोत्कटकासनम् ।
स्वदोषकोपनं वेगरोधविष्टम्भिवह्निहृत्[3] ॥

॥ इत्यर्शोऽध्यायो दशमः समाप्तः ॥

1. द्विफलवातव्या 2. क्षारमथचाथैवा 3.

## अथ अजीर्णचिकित्सितं नाम

# ॥ एकादशोऽध्यायः ॥

जठरे [1]विषमाद्यग्नौ स्वदोषघ्नो क्रिया हिता ।
भस्मकाख्येऽतितीक्ष्णोत्थे पित्तघ्नी कफवर्धनी ॥ १
सिन्धूत्थाग्न्यभयाकृष्णाचूर्णमुष्णाम्बुना पिबेत् ।
यवक्षाराज्यविश्वं वा प्रातर्वह्निप्रदीप्तये ॥ २
विबन्धोऽतिप्रवृत्तिर्वा ग्लानिर्मारुतमूढता ।
विष्टम्भो गौरवं भ्रान्तिः सामान्याजीर्णलक्षणम् ॥ ३
[2]शूलाङ्गसादविण्मूत्रसंगा विष्टम्भकाभिधे ।
विधेयं स्वेदनं तत्र पेयं च लवणोदकम् ॥ ४
दग्धोद्गारातितृण्मूर्छा रेकः संकोचमम्लकात् ।
तक्रशीताम्बुसेवात्र कौसुम्भारिष्टमर्दनम् (?) ॥ ५
आमाद्विषूचिकाक्लेदहृल्लासालसकादयः ।
तत्र द्राग्वमनं कार्यं वचाफलपटूदकैः ॥ ६
गात्रभङ्गशिरोजाड्यजृम्भाऽरूच्यादयो रसात् ।
तत्र स्वप्नो दिवा कार्यो लङ्घनं वातवर्जनम् ॥ ७
अजीर्णे प्रबले नाम्ले पाष्ण्योर्दाहः सलङ्घनम् ।
अम्ले तु तृषि मध्वम्बु क्षुधि लाजाः समाक्षिकाः ॥ ८
सौवर्चलाभयाकृष्णा मधुना सविरेचने ।
सशूले तूष्णवारा द्रागजीर्णे वमितः पिबेत् ॥ ९

### ॥ अग्निमुखचूर्णम् ॥

हिङ्गू[3]ग्रामागधीविश्वदीप्यपथ्याग्निकुष्ठकैः ।
चूर्णं भागोत्तरैराग्निमुखमुष्णोदकादिभिः ॥ १०

1. विषमध्यग्नौ 2. शूलानि ग्रन्थि 3. उग्रमगदा

पीतं जयेदजीर्णार्शःशूलोदावर्तमारुतान् ।
सर्वगुल्मोदरप्लीहकासश्वासक्षयानपि ॥ ११

## ॥ भास्करलवणम् ॥

द्विघ्नं त्वग्बहुलं द्विजीरकटुकं सिन्धूत्थताळीसकं
ग्रन्थीभाख्यदलाम्लधान्यकमिदं सद्दाडिमाख्यं कटु ।
तत्राद्यैः पटुभास्करं प्रतिपलं मन्दाग्निगुल्मोदर-
प्लीहार्शोग्रहणीक्षयादिकसनश्वासास्यहृद्रोगनुत् ॥ १२

## ॥ पथ्यावटी ॥

चव्याग्नित्रिकटुद्विजीरहपुषावृक्षाम्लदीप्यद्वयं
चातुर्जातकदाडिमाख्य[1]चविकावत्साद् द्विभागाऽभया ।
सग्रन्थ्यम्लवद्वयाद् गुडयुता पथ्यावटी वह्निकृ-
द्धानास्त्रक्षयगुल्मकासगुदजानाहग्रहण्यर्तिहृत् ॥ १३

## ॥ सामान्योपायाः ॥

कळिङ्गातिविषाहिङ्गुभृङ्गाग्रारुचकाभयाः ।
पिबेदुष्णाम्बुनाऽजीर्णशूलारोचकशान्तये ॥ १४
सिद्धार्थार्जुनतोयेन पाययेद्रुचकादिकम् ।
श्वेतापराजितामूलं काञ्जिकेनाञ्जनं दृशोः ॥ १५
मातुलङ्गीजटां व्योषनिशाबीजं करञ्जजम् ।
काञ्जिकेनाञ्जनं हन्याद्विषूचीं दारुणामपि ॥ १६
नियताजीर्णकेतुर्यन्नावनं जूर्णकाङ्ग्निगा ।
पानं च गुडसामुद्रनिम्बचूर्णककाञ्जिकैः ॥ १७

1. यमिकात्

॥ दारुषट्कम् ॥

दारुहिङ्गुशताह्वोग्रासिन्धुकुष्ठाम्लकैर्हितः ।
साध्मानात्युदरे लेपो वर्तिर्वा मूत्रविड्ग्रहे ॥ १८

॥ असाध्यलक्षणम् ॥

यः श्यामनखदन्तोष्ठमग्ननेत्रातिवान्तियुक् ।
शीर्णसन्धिः स्वरभ्रंशी प्रायोऽजीर्णी स नश्यति ॥ १९

॥ इत्यग्निमान्द्याजीर्णाध्याय एकादशः ॥

## अथ रक्तपित्तप्रदरचिकित्सितं नाम

# ॥ द्वादशोऽध्यायः ॥

### ॥ अथ रक्तपित्तचिकित्सा ॥

यकृत्प्लीहाश्रितं रक्तं वृद्धं पित्तप्रकोपतः ।
आमाशयाद् व्रजेदूर्ध्वमधः पक्वाशयात्तथा ॥ १
वातात्स्याद्वारुणं रूक्षं फेनिलं तनु शोणितम् ।
पित्तात्पीतं कषायं च गोमूत्राञ्जनसन्निभम् ॥ २
श्लैष्मिकं स्निग्धमापाण्डु पिच्छिलं तन्तुमद्भवेत् ।
संसृष्टलक्षणं द्वन्द्वं सर्वरूपं त्रिदोषजम् ॥ ३

### ॥ साध्यासाध्यलक्षणम् ॥

ऊर्ध्वं पृथक् च तत्साध्यं द्वन्द्वं याप्यमधश्च यत् ।
सर्वदोषं द्विमार्गं च दुश्चिकित्स्यतमं मतम् ॥ ४
छर्दिमूर्छाभ्रमश्वासकासवैस्वर्यदाहवत् ।
जाम्बवेन्द्रधनुर्वर्णं कृमियुग्वाऽप्रतिक्रियम् ॥ ५

### ॥ उपक्रमनिरूपणम् ॥

न संग्राह्यमसृग्दुष्टमादितो बलिनो यतः ।
तद्गलग्रहगुल्मार्शोज्वरकुष्ठादिरोगकृत् ॥ ६
विधेयं रक्तपित्तादौ यथाशक्ति विशोषणम् ।
जलं च चन्दनोशीरपर्पटाब्दसुसाधितम् ॥ ७
ऊर्ध्वगे [1]श्लेष्मसंसृष्टे विरेकः ससितामधुः ।
आरग्वधेन धाव्या वा त्रिवृता पथ्ययाऽथ वा ॥ ८
अधोगते तु पेयाद्यैर्वान्तिः सक्षीरमाक्षिकैः ।
यष्टीफलकालिङ्गाब्दैः कार्यः स्तम्भोऽबले सदा ॥ ९

---

1. श्वेतसन्ते

॥ सामान्योपायाः ॥

प्रियङ्ग्वञ्जनमुस्तलोध्र[1]चोचचूर्णेन संयुतः ।
लेह्यः क्वाथो रसो वाऽसृक्पित्तजे ससितामधुः ॥ १०
शङ्खपद्मककालेयफलिनीलोध्रगैरिकाः ।
पृथक्पीताः सिताक्षौद्रशृताद्भिः शोणितापहाः ॥ ११
पक्वोदुम्बरकाश्मर्यपथ्याखर्जूरगोस्तनाः ।
मधु घ्नन्ति सिता लीढा रक्तपित्तं पृथक् पृथक् ॥ १२
स्याद् द्राक्षया फलिन्या वा त्वेलया नागरेण वा ।
श्वदंष्ट्रया शतावर्या रक्तजित्साधितं पयः ॥ १३
दूर्वादाडिमपुष्पाम्रगर्भगैरिकशङ्खजः ।
रसोऽलक्तकयुक्तः स्यात [2]स घ्राणास्रस्रुतिमहः ॥ १४

॥ एलादिवटिका ॥

एलापत्रत्वचद्राक्षाकृष्णा व्यग्राः पलांशिकाः ।
खर्जूरशर्करायष्टि[3]लाक्षाः क्षौद्रेण तद्भवा ॥ १५
कार्षिका वटिका हृद्या वृष्या स्याद्रक्तपित्तनुत् ।
क्षयोरःक्षतरक्तार्शस्तृण्मूर्छामयहृत्परम् ॥ १६

॥ अतिदेशः ॥

रक्तातिसारिकं कर्म रक्ते स्यात्प्रायगामिनि ।
पित्तप्रमेहिणां कृत्स्नं मेढ्रगे च नियोजयेत् ॥ १७

॥ इति रक्तपित्तचिकित्सा ॥

॥ अथ असृग्दरः ॥

अपत्यवर्त्मगं स्त्रीणां रक्तपित्तमसृग्दरम् ।
तच्छान्त्यै पयसः पानं शृतस्य ससितामधु ॥ १८
मधुतार्क्ष्यजसंयुक्तं मूलं स्यात्तण्डुलीयजम् ।
तण्डुलाम्बुयुतं पीतं सर्वप्रदरनाशनम् ॥ १९

1. चोल 2 तत् प्रणास्रातजत्तरः 3. -द्राक्षा

[1]पेटाकार्यम्रपत्रोत्थरसकेसरशर्कराः ।
पीता भवन्ति नाशाय योनिपूयासृजो द्रुतम् ॥ २०
मुद्गपर्णीविपक्केन तैलेन पिचुधारणम् ।
कर्तव्यं रक्तनाशाय मार्दवाय सुखाय च ॥ २१
[2]शीतावगाहसेकाद्याः प्रशस्ता रक्तपित्तिनाम् ।
शालिमुद्गादयो योज्या जाङ्गलाश्च रसाः पुनः ॥ २२

॥ इति रक्तपित्तप्रदराध्यायो द्वादशः ॥

1. पीटाकार्यम्र 2. शितावगाहसिकाद्याः

# अथ मूत्ररोगचिकित्सा नाम

# ॥ त्रयोदशोऽध्यायः ॥

## ॥ अथ प्रमेहः ॥

मूत्रातिवृद्धिर्वैवर्ण्यं प्रमेहे ते च विंशतिः ।
दन्ताद्यतिमलश्वासतृड्दाहाद्यत्र पूर्वजम् ॥ १
उदकेक्षुसुरापिष्टसिकतालवणाह्वयाः ।
सान्द्रफेनशनैःशुक्रसंज्ञा मेहाः कफाह्वयाः ॥ २
हरिद्रानीलमाञ्जिष्ठकालक्षाराम्लसंज्ञिताः ।
पैत्तिका ; वातजाः सर्पिर्मधुहस्तिवसाभिधाः ॥ ३
स्वनामरूपिणः सर्वे

## ॥ साध्यासाध्यलक्षणम् ॥

साध्यास्तु कफजा मताः ।
असाध्या वातिका दुष्टा याप्याः पित्तसमुत्थिताः ॥ ४

## ॥ श्लेष्मप्रमेहे ॥

यवानिका मृणालं च गुडूची सहरीतकी ।
कृमिशत्रुर्हरिद्रे द्वे पथ्यानागरसंयुते ॥ ५
[1]मञ्जिष्ठा खदिरो दार्वी चाग्निमन्थः फलत्रिकम् ।
श्लोकार्धिकास्त्रयः क्वाथाः सक्षौद्राः श्लेष्ममेहिनाम् ॥ ६

## ॥ पित्तप्रमेहे ॥

पटोलारिष्टपत्राणि गुडूच्यामलकाम्बुदाः ।
अभयाऽऽमलकोशीरनीलवारिजवारिदाः ॥ ७
उदीच्यधातकीपुष्पं लोध्रं कालेयकान्वितम् ।
मुद्राढ्याः स्युस्त्रयः क्वाथाः श्लोकार्धैः पित्तमेहिनाम् ॥ ८

---

1. त्वावष्ठा

॥ सामान्योपायाः ॥

अनुबन्धं परिज्ञाय वमनं कफपित्तयोः ।
तैलं कफस्य पित्तस्य सर्पिः स्यात्स्वगुणैः श्रृतम् ॥ ९
गुडूच्यास्तु रसः पेयो मधुना सर्व[1]मेहजित् ।
सिताकल्कयुतो धात्र्या रसो वा माक्षिकान्वितः ॥ १०
त्रिफलादारुदार्व्यब्दक्वाथो वा मधुरत्रियुक् ।
कुटजासनदार्व्यग्निफलत्रयरसोऽथ वा ॥ ११

॥ पथ्यापथ्यम् ॥

मेहिनां तिक्तशाकानि जाङ्गला मृगपक्षिणः ।
यवान्नविकृतिर्मुद्गाः शस्यन्ते शालिषष्टिकाः ॥ १२
सीधुमाध्वीक[2]साराम्बुमधुयुक्तुषाम्भसाम् ।
पानमिष्टं प्रमेहेषु फलत्रयजलस्य च ॥ १३
सौवीरकं सुरां शुक्तं तैलं क्षीरं घृतं गुडम् ।
अम्लेक्षुरसपिष्टान्नानूपमांसानि वर्जयेत् ॥ १४

॥ पिडकाचिकित्सा ॥

प्रमेहपिडिकानां च [3]प्रस्थार्थं रक्तमोक्षणम् ।
पाटनं तु विपक्वानां व्रणवत्स्यात् क्रिया परा ॥ १५

॥ इति प्रमेहः ॥

॥ अथ मूत्रकृच्छ्राणि ॥

अष्टौ स्युर्मूत्रकृच्छ्राणि तीक्ष्णाद्यशनभेदतः ।
सशूलं वातिकं कृच्छ्रं पित्तजं दाहसंयुतम् ॥ १६
कफाद्गौरवशोफाढ्यं त्याज्यं स्यात्सर्वदोषजम् ।
रक्तजं शोणितस्त्रावि शुक्रजं तन्निरोधतः ॥ १७
शकृद्विघातजं प्रोक्तमष्टमं शल्यजं तथा ।

॥ वातकृच्छ्रे ॥

अभ्यङ्गस्नेहनस्वेदनिरूहान्वासनादयः ॥ १८
दर्भस्थिरादिसिद्धाश्च वातकृच्छ्रे रसा हिताः ।

---

1. सेवि 2. सिराम्बु 3. प्रस्तार्थं

॥ पित्तशोणितकृच्छ्रे ॥

पित्तशोणितजे दार्वीं मधु धान्यम्बुना पिबेत् ॥ १९
उर्वारुबीजयष्ट्याह्वदार्वीर्वा तण्डुलाम्बुना ।

॥ कफकृच्छ्रे ॥

मूत्रेण सुरया वाऽपि कदलीस्वरसेन वा ॥ २०
कफकृच्छ्रविनाशाय मस्तुना वा त्रुटिं पिबेत् ।

॥ शुक्लकृच्छ्रे ॥

लिहेच्छुक्रविबन्धोत्थे शिलाजतु समाक्षिकम् ॥ २१
[1]वृष्यैर्बृंहितधातोः स्युः संसेव्याः प्रमदोत्तमाः ।

॥ विबन्धकृच्छ्रे ॥

क्वाथो गोक्षुरशम्याकपथ्यायासदृषद्भिदाम् ॥ २२
समधुर्मूत्रकृच्छ्रे स्यात्सरुग्दाहविबन्धके ।

॥ सामान्योपायाः ॥

तण्डुलाम्बुसिताद्राक्षं सोष्णं क्षीरगुडं तथा ॥
गोकण्टाम्बुयवक्षारं खण्डः क्षारं च कृच्छ्रहृत् ॥ २३

॥ इति मूत्रकृच्छ्राणि ॥

॥ अथाश्मरी ॥

वातसंवर्तिताच्छुक्रात् कफाद्वाऽश्मवदश्मरी ।
सकृच्छ्रतीव्ररुग्वस्तौ भिन्ना सा शर्करा मता ॥ २४
सगुडो वारणक्वाथो बस्तिशूलाश्मरीहरः ।
क्वाथो वा [2]शीघ्रमूलोत्थः कवोष्णोऽश्मरिपातनः ॥ २५
श्वदंष्ट्रैरण्डकौन्त्यैलायष्टिकृष्णाऽश्मभेदिनाम् ।
क्वाथः साश्मजतुक्षौद्रः शर्कराऽश्मरिशूलजित् ॥ २६
शृङ्गवेरयवक्षारपथ्याकालेयकान्वितः ।
दधिमण्डो जयत्युग्रामश्मरीमाशुपातनः ॥ २७
सर्वदा संप्रयोक्तव्यो गणो वीरतरादिकः ।
शल्यभूतां तथा चैनां प्रत्याख्याय समुद्धरेत् ॥ २८

॥ इति प्रमेहमूत्रकृच्छ्राश्मर्यध्यायस्त्रयोदशः ॥

---

1. वृष्यैजहिता 2. लामज्जमूलक्वाथइत्यर्थः

अथ क्षयरोगचिकित्सितं नाम

## ॥ चतुर्दशोऽध्यायः ॥

शुक्लक्षयाद्वेगरोधात् साहसाद्विषमाशनात् ।
त्रिदोषकोपजो यक्ष्मा स्यात्कासश्वासपूर्वकः ॥ १
तस्य रूपाणि वैस्वर्यं कासश्वासारुचिज्वराः ।
शिरोंऽसपार्श्वरुक्कुक्षिरोगश्छर्दिः कफोऽधिकः ॥ २
निष्ठीवनत्वं स्वर्यकासश्वासैर्निपीडितम् ।
[1]शूनमुष्कोदरं क्षीणं मेह्यतीसारिणं त्यजेत् ॥ ३
वातात्प्रायेण विट्छोषः स सं[2]रक्ष्यो बलप्रदैः ।
[3]अक्षीणे पञ्चकर्मात्र योज्यं क्षीणबले न तु ॥ ४
धान्याकापिप्पलीविश्वदशमूलीजलं पिबेत् ।
पार्श्वशूलज्वरश्वासपीनसादिनिवृत्तये ॥ ५
शृङ्गीद्राक्षाकणापथ्यायासखर्जूरकैः समैः ।
कासश्वासहरः स्वर्यो लेह्यो मध्वाज्यसंयुतैः ॥ ६

॥ ताळीसादि ॥

ताळीसं मरिचं शुण्ठी कृष्णा भागोत्तराः शुभाः ।
भागस्त्वगेलयोर्द्विघ्ना सिता कासादिहृत्क्षये ॥ ७

॥ सितोपलादि ॥

सितोपलातुगाकृष्णैलात्वचोऽर्धांशिकाः क्रमात् ।
स[4]क्षौद्राज्याश्च पाण्यङ्घ्रिदाहक्षयगदापहाः ॥ ८

---

1. सूनशुष्कादर षीणं
2. रक्षोबलप्रदाः
3. अक्षिणी
4. क्षोद्रयाकयण्यङ्घ्रि

## ॥ लवङ्गादि ॥

स्यात्तुल्यांशलवङ्गकेसरतुगाकङ्कोलजातीफल-
त्वक्सेव्यद्वयलोह[1]कुञ्चितजलाजाजीन्दुविश्वोत्पलः ।
कृष्णैलाहिमवान् सिताद्विलवयुग्योगश्च वीर्यप्रदः
हृत्कण्ठग्रहमेहमोहतमकातीसारयक्ष्मापहः ॥ ९

## ॥ सामान्योपायाः ॥

दशमूलशृतात् क्षीरात्सर्पिस्तन्मधुसंयुतम् ।
स्वयं शिरोंऽसपार्श्वार्तिश्वासकासज्वरापहम् ॥ १०
धात्रीद्राक्षासितातैलं मधु लेहः क्षयापहः ।
मधुसर्पिःसिताकृष्णावाजिगन्धोद्भवस्तथा ॥ ११
शतावरीविदार्यश्वगन्धापथ्यापुनर्नवाः ।
बलाद्वयश्वदंष्ट्राऽऽज्यमधुयुक्ताः क्षयापहाः ॥ १२
शिलाजतुमधुव्योषताप्यलोहरजांसि यः ।
[2]संलिह्यात् क्षीरभुक्तस्य क्षयः क्षयमवाप्नुयात् ॥ १३

## ॥ च्यवनप्राशलेह्यम् ॥

बिल्वादिपञ्चमूलाब्दबलापर्णीचतुष्टयम् ।
ऋद्धिकृष्णावरीपथ्याजीवकर्षभकामृताः ॥ १४
द्राक्षा पुनर्नवा मेदा जीवन्ती [3]च विदारिका ।
उत्पलैला शटी शृङ्गी काकोली वृषचन्दनम् ॥ १५
मुसली गोक्षुरव्याघ्री पुष्करं द्विपलोन्मिताः ।
शतानि पञ्च धात्र्याश्च जलद्रोणे विपाचयेत् ॥ १६
पलद्वादशके भृष्ट्वा धात्रीं तैले च सर्पिषि ।
सिताऽर्धतुलया युक्ते क्वाथे तल्लेहवत्पचेत् ॥ १७
[4]द्वे पिप्पल्याः पले वांशाश्चत्वारः [5]षट् च माक्षिकात् ।
चातुर्जातपलं सिद्धे शीते तस्मिन्नियोजयेत् ॥ १८

---

1. सुखयामार्सान्द्रनिष्टोत्पल
2. ह्ल्या
3. शीतवारिभा
4. द्विपिप्पल्याः फले वासत्
5. षट्कमाक्षिरात्

हृद्रोगश्वासतृट्कासवातरक्तक्षयार्तिजित् ।
[1]मेध्योऽय च्यवनप्राशः स्वर्यो वृष्यो रसायनम् ॥

॥ निर्गुण्डीघृतम् ॥

समूलपत्रनिर्गुण्डीरसे पक्वं घृतं पिबेत् ।
यक्ष्मादिसर्वरोगघ्नं [2]सर्वातङ्कविवर्जितं तत् ॥

॥ अश्वगन्धाघृतम् ॥

अश्वगन्धाकषायेण कल्केन च पयोऽन्वितम् ।
घृतं सुपक्वं शोषघ्नं वृष्यं मांसविवर्धनम् ॥ २१

॥ अभयारिष्टः ॥

कपित्थं द्विपलं ग्राह्यं तदर्धा चेन्द्रवारुणी ।
धात्री प्रस्थं तदर्धा तु पथ्याऽन्ये द्विपलांशिकाः ॥ २२
कृष्णैलावालुकं लोध्रं विडङ्गमरिचं जले ।
चतुर्द्रोणे पचेत्पादशेषं घृतघटे [3]गुडात् ॥ २३
[4]तुलां निशायुगव्योषताळीसत्रिसुगन्धिजैः ।
पलैर्युगभयारिष्टः पेयोऽर्शःक्षयकुष्ठजित् ॥ २४
शोफपाण्डुज्वरप्लीहहृद्रोगोदरगुल्महा ।
ग्रहणीकामिलाश्वित्रकृम्यरोचकनाशनः ॥ २५

॥ अतिदेशादि ॥

उपद्रवा ज्वराद्या ये ते साध्यास्तैश्चिकित्सितैः ।
पुष्टये शोषिणां कार्यमभ्यङ्गोद्वर्तनादिकम् ॥ २६
शालिषाष्टिकगोधूमयवमुद्गादयः शुभाः ।
मद्यानि जाङ्गलाः पक्षिमृगाः शस्ता विशुष्यतः ॥ २७

इति क्षयरोगाध्यायश्चतुर्दशः ॥

1. मध्या
2. सर्वान्तक
3. स्थितं
4. गुडं

## अथ कासश्वासहिक्काचिकित्सितं नाम

# ॥ पञ्चदशोऽध्यायः ॥

### ॥ अथ कासचिकित्सा ॥

पित्तस्थानमतिक्रम्य वातः कफपुरोगमः ।
करोति पञ्चधा कासश्वासहिक्काः पृथक् पृथक् ॥ १
[1]हृत्पार्श्वोरःशिरःशूलस्वरभेदाः समीरणात् ।
तृड्दाहपित्ततिक्ताम्लच्छर्दिलिङ्गी च पित्ततः ॥ २
स्यात्क फाद्गौरवक्लेदपीनसारुचिलक्षणम् ।
सासृङ्निष्ठीवनश्वासः क्षतजश्च क्षतोरसः ॥ ३
पूययुक्तोद्वमी कासः क्षयाख्यः स्यात् त्रिदोषजः ।

### ॥ वातकासे ॥

सतैला विश्वदुःस्पर्शश्रृङ्गीद्राक्षाशटीसिताः ॥ ४
शटीश्रृङ्गीकणाभार्ङ्गीगुडाब्दतिलयासकाः ।
शिलासिन्धुमधुव्योषवेल्लाव्यामयरामठाः ॥ ५
श्लोकार्धकास्त्रयो लेहा वातकासहराः पराः ।

### ॥ पित्तकासे ॥

पिप्पलीशर्करामांसीलाजामलकगोस्तनाः ॥ ६
मधुकं पिप्पलीमूलं मूर्वा द्राक्षा महौषधम् ।
उपकुल्या सखर्जूरतुङ्गागोक्षुरकान्विता ॥ ७
साध्याः क्षौद्रे त्रयो लेहाः श्लोकार्धे पित्तकासिनाम् ।

### ॥ कफकासे ॥

भद्रमुस्ताऽभया धात्री पिप्पली तामलक्यपि ॥ ८
अभया पिप्पलीमूलं देवदारु महौषधम् ।

---

1. हृच्छिरः पर्श्वहृच्छुक

चित्रकं पिप्पलीमूलं पिप्पली नागपिप्पली ॥ ९
त्रीन् लेहान् कफकासघ्नानेतान् भुञ्जीत मानवः ।

॥ मञ्जिष्ठादिचूर्णम् ॥

मञ्जिष्ठाऽञ्जनमूर्वाऽग्निपाठाकृष्णानिशारजः ॥
क्षतक्षयार्शः कुष्ठाश्मकासश्वासं च नाशयेत् ॥ १०

॥ पञ्चकादिचूर्णम् ॥

देवदारु बला रास्ना त्रिफला व्योषपञ्चकम् ।
विडङ्गैले सितातुल्यं चूर्णं स्यात्पञ्चकासजित् ॥ ११

॥ कण्टकारीघृतम् ॥

घृतं रास्नाबलाव्योषश्वदंष्ट्राकल्कपाचितम् ।
कण्टकारिरसे सर्वकासवैस्वर्यनाशनम् ॥ १२

॥ सामान्योपायाः ॥

पथ्याविश्वगुडाब्दानां [1]वटकान् धारयेन्मुखे ।
सर्वेषु श्वासकासेषु केवलं वा विभीतकम् ॥ १३
शिलाऽऽलेङ्गुदयष्ट्यब्दमांसीधूमं पिबेन् त्र्यहम् ।
गुडक्षीरानुपानाढ्यं सर्वकासनिवृत्तये ॥ १४

॥ इति कासचिकित्सा ॥

॥ अथ श्वासचिकित्सा ॥

महोर्ध्वच्छिन्नतमकक्षुद्राः श्वासाश्च पञ्चधा ।
महाश्वासो महाघोषः संज्ञाहृद् दृग्विवर्तनः ॥ १५
ऊर्ध्वगन्तूर्ध्वदृष्टिः स्यान्मोहहृत्पार्श्वशूलवान् ।
विच्छिन्नं यः श्वसित्युच्चैरुत्कासश्छिन्नसंज्ञितः ॥ १६
तमकः पीनसोद्रेकी समोहो दुर्दिने बली ।
[2]मन्दायासोद्भवश्वासो निर्बाधः क्षुद्रसंज्ञितः ॥ १७
क्षुद्रः साध्यस्तमो याप्यः परे त्याज्याः प्रमादिनः ।
श्वासहिक्कातुरे पूर्वं तैलाक्ते स्वेद इष्यते ॥ १८

1. घाटकान् 2. मन्दकासोद्भव-

ऊर्ध्वाधःशोधनं शक्ते दुर्बले शमनं मतम् ।
सक्षौद्राज्याः कणाद्राक्षाशृङ्गीपथ्यादुरालभाः ॥ १९
गुडोषणनिशाकृष्णाद्राक्षारास्नाः सतैलकाः ।
पथ्यातिक्ताकणावासाभार्ङ्ग्यः क्षौद्राज्यसंयुताः ॥ २०
इमे श्लोकार्धका लेहास्तीव्रश्वासहरास्त्रयः ।
हिक्काश्वासहरी भार्ङ्गी विश्वा वा सोष्णवारिणा ॥ २१
[1]दग्धं मयूरनालं वा कणाऽऽज्यमधुसंयुतम् ।
भार्ङ्गीक्षुद्राऽर्जकद्राक्षाच्छिन्नाक्वाथः कणायुतः ॥
व्योषपथ्याऽक्षमधु वा कासश्वासकफान्तकृत् ॥ २२

॥ इति श्वासचिकित्सा ॥

## ॥ अथ हिक्काचिकित्सा ॥

क्षुद्रा हिक्काऽल्पवेगा या लक्ष्या [2]जत्रुसमुत्थिता ।
महाहिक्का महाशब्दवेगा स्यान्मर्मदुःखदा ॥ २३
गम्भीराख्या तु नाभ्युत्था ज्ञेया गम्भीरनादिनी ।
यमला यमलैर्वेगैस्तीव्ररुङ् मूर्धकम्पिनी ॥ २४
हिक्का स्यादन्नजाऽत्यन्नपानपीडितमारुतात् ।
आसां क्षुद्रान्नजे साध्ये शेषाः प्राणहरा मताः ॥ २५
कोलमज्जाऽञ्जनं लाजाः कृष्णाखर्जूरमुस्तकम् ।
धात्रीकणासिताविश्वं हिक्काघ्नं क्षौद्रयुक्त्रयम् ॥ २६
मधुकं मधुसंयुक्तं पिप्पली शर्कराऽन्विता ।
नागरं गुडसंयुक्तं हिक्काघ्नं नावनत्रयम् ॥ २७
[3]धूमौ हिक्काहरौ पेयौ साज्ययोः सर्जकुष्ठयोः ।
श्वासरोधेऽम्बुपानं वा जलसेकोऽथवा हितः ॥ २८
शृङ्गी भार्ङ्गी वरा क्षुद्रा पटूनि व्योषपौष्करे ।
एतत्क्वाथोऽश्नसा हिक्काश्वासपीनसकासहृत् ॥ २९

1. दुग्धं   2. जन्तु   3. धूमाहिक्काहृता

तृषितो दशमूलस्य क्वाथं दारुभवं तथा ।
कोष्णोदकं पिबेद्युक्त्या हिक्काश्वासप्रभेदि तत् ॥ ३०
हिक्काश्वासार्दिते सोष्णं लघु वातानुलोमनम् ।
कफवातहरं सर्वमन्नपानं प्रयोजयेत् ॥ ३१

इति कासश्वासहिक्काऽध्यायः पञ्चदशः ॥

अथ स्वरभेदारोचकचिकित्सितं नाम

# ॥ षोडशोऽध्यायः ॥

## ॥ अथ स्वरभेदचिकित्सा ॥

स्वरभङ्गः पृथग्दोषैर्युक्तैः शोषाच्च मेदसः ।
स्वलिङ्गैः स्युस्त्रयः साध्या याप्योऽन्योऽन्त्यौ न सिद्धये ॥ १
आद्ये कोष्णं जलं पेयं जग्ध्वा घृतगुडौदनम् ।
सर्पिः पीत्वा पिबेत् क्षीरं स्वरभ्रंशे तु पित्तजे ॥ २
मूत्रेण ग्रन्थिकव्योषं कफमेदःस्वरक्षये ।
क्षयजे सर्वजे वाऽपि प्रत्याख्याय भवेत्क्रिया ॥ ३

## ॥ चव्याद्या गुटिका ॥

चव्याम्लवेतसकटुत्रिकतिन्त्रिणीक-
तालीसजीरकतुगादहनैः समांशैः ।
चूर्णं गुडप्रमृदितं त्रिसुगन्धयुक्तं
वैस्वर्यपीनसकफारुचिषु प्रशस्तम ॥ ४

॥ इति स्वरभेदचिकित्सा ॥

## ॥ अथारोचकचिकित्सा ॥

दोषैः सर्वैश्च भीशोकलोभक्रोधैरुपद्रवैः ।
अरोचकं भवेत्तत्र वक्त्रे [1]स्याद्दोषलिङ्गवत् ॥ १
वचामधुकनिम्बाद्यैः स्वदोषघ्नैर्भवेद्वमिः ।
लघुरूक्षान्नपानानि तथा नैकरसान्यपि ॥ २
अजाजिशर्कराकुष्ठसुवर्चलबिडोषणम् ।
धानैलापद्मकोशीरपिप्पलीचन्दनोत्पलम् ॥ ३

1. हृद्दोष

लोध्रतेजोवतीपथ्याञ्यूषणं सयवाग्रजम् ।
आर्द्रदाडिमनिर्यासशर्कराजीरकान्वितम् ॥ ४
सतैलमाक्षिकास्त्वेते चत्वारः कवलग्रहाः ।
वाताद्यरोचकं हन्युरन्यच्च कटुतिक्तकम् ॥ ५
कारव्यजाजिमरीचं द्राक्षावृक्षाम्लदाडिमम् ।
सौवर्चलगुडं क्षौद्रं सर्वारोचकनाशनम् ॥ ६

॥ यवानीषाडवः ॥

यवानीतिन्त्रिणीकाम्लव्योषदाडिमकोलकैः ।
अंशैस्त्वक्चकाजाजिधान्यैकांशैश्च षाडवः ॥ ७
त्रिदशांशसितायुक्तो हृद्यो रुच्योऽतिसारहृत् ।
ग्रहणीश्वासकासार्शःशूलानाहविशोधनम् ॥ ८

॥ इति स्वरभेदारोचकाध्यायः षोडशः ॥

अथ च्छर्दितृष्णामूर्छाचिकित्सितं नाम

## ॥ सप्तदशोऽध्यायः ॥

### ॥ अथ च्छर्दिचिकित्सा ॥

छर्दिः कृष्णा कषाया सशूलवेगा समीरणात् ।
पैत्तिका पित्तरक्तोष्णा हरिता दाहलक्षणा ॥ १
श्लेष्मला पिच्छिला स्वादुः सितसान्द्रा कफोल्बणा ।
सर्वरूपान्विता ज्ञेया सन्निपातसमुत्थिता ॥ २
पूत्यनिष्टमनस्तापाच्छर्दिर्बीभत्सजा मता ।
सासृक् चन्द्रकिनी त्याज्या क्षीणस्योपद्रवान्विता ॥ ३
वातजायां वमौ कार्यं लङ्घनादनु रेचनम् ।
वमनं तु बलोपेते दुर्बले शमनं हितम् ॥ ४
वातच्छर्द्यां पिबेत्सर्पिः सैन्धवेन समन्वितम् ।
बिडसौवर्चलव्योषसिन्धूत्थैर्वा युतं तथा ॥ ५
सोदीच्यं गैरिकं पेयं सेव्यं वा तण्डुलाम्बुना ।
सितां धात्रीरसाढ्यां वा पित्तच्छर्दिनिवृत्तये ॥ ६
विडङ्गत्रिफलाविश्वचूर्णं मधुयुतं जयेत् ।
कृमिघ्नत्रिफलाशुण्ठीनामथ वा श्लेष्मजां वमिम् ॥ ७
त्रिफलाया गुडूच्या वा कषायो मधुसंयुतः ।
पेयश्छर्दित्रये पीता मूर्वा वा तण्डुलाम्बुना ॥ ८
रसो धाञ्याः कपित्थस्य पिप्पलीमरिचान्वितः ।
शर्करामधुसंयुक्तो जयेच्छर्दिं चिरोत्थिताम् ॥ ९
एलात्वङ्नागकेसरश्यामालाजकोलास्थि चन्दनम् ।
सकृष्णाब्दासिताक्षौद्रं युक्तं सर्ववमीहरम् ॥ १०

शिलाजतूषणं चूर्णं लाजतुल्यं समाक्षिकम् ।
कपित्थबीजपूराम्बुकल्कितं छर्दिनाशनम् ॥ ११
अश्वत्थाल्याततोयं वा शुद्धं पीतं वमिं हरेत् ।
तथा कलापिलोमोत्थमषिरेव गळे कृता ॥ १२

॥ इति च्छर्दिचिकित्सा ॥

॥ अथ तृष्णाचिकित्सा ॥

तृष्णा पञ्चविधा दोषैः समस्तैश्च क्षयात्तथा ।
कारणं वातपित्तं हि तत्रादौ तन्निवारयेत् ॥ १३
तृष्यर्धकथितं तोयं तप्तलोहाम्बुना पिबेत् ।
लिह्यात्केसरकुष्ठैलादाडिमक्षौद्रशर्कराः ॥ १४
वटशुङ्गोत्पलक्षौद्रलाजा[1]म्रकथितस्य वा ।
गण्डूषा वा पृथक् तृड्घ्ना द्राक्षाक्षौद्रगुडाम्बुना ॥ १५

॥ इति तृष्णाचिकित्सा ॥

॥ अथ मूर्छाचिकित्सा ॥

दोषासृग्विषमद्यैः स्यान्मूर्छा षोढाऽस्रपित्तजा ।
हृत्पीडा जृम्भणं ग्लानिमोहाद्याः स्वस्वलिङ्गिनि ॥ १६
स्वकारणहरं शीतं ज्वरघ्नं मूर्छितो भजेत् ।
द्राक्षां वा मधु कृष्णां वा यासं वाऽद्यात्तु सभ्रमः ॥ १७

॥ इति च्छर्दितृष्णामूर्छाऽध्यायः सप्तदशः ॥

1. अरुग्वांदकास्य वा

अथ पाण्डुहलीमककामलाचिकित्सितं नाम

# ॥ अष्टादशोऽध्यायः ॥

## ॥ अथ पाण्डुरोगचिकित्सा ॥

तीक्ष्णाम्बुलवणासात्म्यमृत्तिकादिनिषेवणात् ।
स्यात्पृथग्युगपद्दोषैः पाण्डुरोगश्चतुर्विधः ॥ १

वैवर्ण्यं दोषलिङ्गानि बलसत्त्वाग्निमन्दता ।
कृशता श्वयथुर्वा स्यात् पाण्डौ स्निग्धं विरेचयेत् ॥ २

दुष्टशोफज्वरच्छर्दितृट्क्लमार्शोऽतिसारयुक् ।
पीतालोकी सितः क्षीणः पाण्डुरोगी जहात्यसून् ॥ ३

मूर्वातिक्तानिशायष्टिकृष्णाचन्दनपर्पटैः ।
त्रायन्तिवत्सभूनिम्बपटोलाम्बुददारुभिः ॥ ४

अक्षमात्रैर्घृतप्रस्थं पक्वं क्षीरे चतुर्गुणे ।
पाण्डुताज्वरविस्फोटशोफार्शोरक्तपित्तजित् ॥ ५

फलत्रिकामृतावासातिक्ताभूनिम्बनिम्बजः ।
क्वाथो मधुयुतो हन्यात्पाण्डुरोगं सकामिलम् ॥ ६

क्षीरभुङ् मूत्रसंयुक्तां पथ्यां पाण्ड्वामयी पिबेत्
क्षीरेण लोहचूर्णं वा गोमूत्रेण सुभावितम् ॥ ७

[1]त्रिफलाऽग्न्यब्दजन्तुघ्नव्योषैर्लोहरजः समम् ।
क्षौद्राज्यवत्प्रमेहार्शःकामलापाण्डुकुष्ठनुत् ॥ ८

लोहकालतिलव्योषैः समं सर्वैश्च तार्प्यकम् ।
सक्षौद्रमनु तक्रं स्याद्घोरपाण्ड्वर्तिशोफहृत् ॥ ९

वर्षाभूदारुवेल्लाब्दपञ्चकोलवरोषणम् ।
सवत्सं सममण्डूरं गोमूत्रेऽष्टगुणे पचेत् ॥ १०

---

1. त्रिफलाभयम्ल

घनं तक्रेण तत्कर्षं पीत्वा तक्रौदनाशनः ।
शोफपाण्डुग्रहण्यर्शोमन्दाग्नित्वविवर्जितः ॥ ११

॥ इति पाण्डुरोगचिकित्सा ॥

## ॥ अथ हलीमककामलाचिकित्सा ॥

सतृट्तन्द्राज्वरः पाण्डुर्वातपित्ताद्धलीमकः ।
तं जयेत्कामलापाण्डुभेषजैः स्वादुभोजनैः ॥ १२
पित्तान्मूत्रादिरक्तत्वं मुखवर्णस्य पीतता ।
हरिद्रे नयने सा स्यात्कामला तत्र रेचनम् ॥ १३
सर्वाङ्ग[1]शूनः पीताक्षः स्वप्नाभिष्यन्दपीडितः ।
भेकाभोऽल्पेन्द्रियोऽल्पाग्निस्त्याज्योऽसौ कुम्भकामली ॥ १४
पिष्टैर्बलानिशानिम्बात्रिफलामधुकैः समैः ।
सक्षीरैर्माहिषं सर्पिः साधितं कामलापहम् ॥ १५
गुडूच्यामलकाया वा दार्व्या निम्बस्य वा रसः ।
प्रातर्माक्षिकसंयुक्तः शीलितः कामलापहः ॥ १६
धात्रीलोहनिशाव्योषशर्कराक्षौद्रसर्पिषाम् ।
लेहो निवारयत्याशु कामलामुद्धतामपि ॥ १७
अञ्जनं कामलार्तानां द्रोणपुष्पैश्च हिङ्गुना ।
नस्यं कर्कोटकीमूलमाघ्रेयं जालिनीफलम् ॥ १८

॥ इति पाण्डुहलीमककामलाऽध्यायोऽष्टादशः ॥

1. मूनुः

अथ विद्रधिगुल्मचिकित्सितं नाम

# ॥ एकोनविंशोऽध्यायः ॥

## ॥ अथ विद्रधिचिकित्सा ॥

दोषत्रिदोषघाताच्च दुष्टरक्तात् त्वगादिगः ।
शूली दाही घनः शोथो दोषलिङ्गी स विद्रधिः ॥ १
पक्वामताऽत्र शोफोक्ता व्रणवद्वातजं जयेत् ।
कोष्ठजं गुल्मवत्पक्वमपक्वं त्वस्रमोक्षणैः ॥ २
वरणादिगणक्वाथमूषकाद्यन्वितं पिबेत् ।
विरेचनघृतं नाभ्यामपक्वेऽभ्यन्तरोत्थिते ॥ ३
पानभोजनलेपेषु मधुशिग्रु प्रयोजितम् ।
दीप्ते वह्नौ यथादोषमपक्वं हन्ति विद्रधिम् ॥ ४
पाठापुनर्नवाच्छिन्नामूलं तण्डुलवारिणा ।
पृथग्विद्रधिहृत् पीतमिदं वा लेपने हितम् ॥ ५
पाकाद्रक्ष्यो यतोऽसाध्यः प्रमादाच्चेद्भवेदसौ ।
विरेच्यः सर्पिषोक्तेन सर्वमेतत्प्रोजयेत् ॥ ६

॥ इति विद्रधिचिकित्सा ॥

## ॥ अथ गुल्मचिकित्सा ॥

गुल्मः स्याद् ग्रन्थिवत्सर्वैः पार्श्वहृन्नाभिवस्तिषु ।
तत्रान्त्रकूजनाध्मानारुचिविण्मूत्रकृच्छ्रता ॥ ७
वातगुल्मे [1]तु हृच्छूलतोदसंस्फुरणानि च ।
पित्ताद् दुस्स्पर्शतास्वेददाहतिक्तास्यतृड्भ्रमाः ॥ ८
कफात्कासोऽन्नतिश्वासहृल्लासालेपाग्निवान्तयः ।
त्रिदोषात्तु व्ररुग्दाहस्त्वाज्यश्चिन्तादिहृद्धनः ॥ ९

1. गुदकृशूल

ऋतौ गर्भस्रुतौ सूतौ स्त्रीणां वाऽन्तःस्थितेऽसृजि ।
रक्तगुल्मः सरुग्दाहो गर्भलिङ्गादिकृद्भवेत् ॥ १०
कूर्मोन्नतं सिरानद्धं तीव्रार्तिं बहुरोगिणम् ।
हृन्नाभिपाणिपादोत्थशोफं गुल्मं विवर्जयेत् ॥ ११

॥ वातगुल्मचिकित्सा ॥

स्नेहैरुपाचरेत्पूर्वं वातगुल्ममतः परम् ।
चूर्णैरभ्यञ्जनैः स्वेदैर्निरूहैः स्नेहवस्तिभिः ॥ १२
विडङ्गत्रिफलाव्योषचव्यदन्त्यग्निकल्कितम् ।
घृतं पयसि संसिद्धं पानात्पवनगुल्मजित् ॥ १३
रुचकव्योषवेल्लाग्निवरातिक्तायवाग्रजैः ।
घृतं क्षीरे शृतं प्लीहवातगुल्मार्तिकासहृत् ॥ १४
पलांशैर्विश्वचव्याग्निपिप्पलीक्षारसैन्धवैः ।
क्वाथेन चिरिबिल्वस्य घृतप्रस्थं विपाचितम् ॥ १५
गुल्मोदावर्तपाण्डुत्वग्रहणीश्वासकासजित् ।
ज्वरदुष्टप्रतिश्यायप्लीहार्शःशमनं परम् ॥ १६
एतदेव घृतोद्दिष्टं द्रव्यं पीतं विचूर्णितम् ।
उष्णाम्बुहृद्यमस्त्वम्लैर्गुल्मशूलनिवारणम् ॥ १७
हिङ्गूग्राविडविश्वाख्यदीप्यपथ्याग्निपिप्पली ।
भागोत्तरं ग्रहण्यर्शःशूलगुल्मोदरापहम् ॥ १८

॥ पित्तगुल्मचिकित्सा ॥

रूक्षे वासाघृतस्निग्धस्त्रिवृत्खण्डं वराऽम्बुना ।
पित्तगुल्मे पिबेदाज्यं धात्रीतोयेन वा शृतम् ॥ १९
उत्पलादेर्वटादेर्वा दर्भाणां वा कषायके ।
काकोल्याद्यैर्घृतं सिद्धं पित्तरक्तोत्थगुल्मनुत् ॥ २०

॥ श्लेष्मगुल्मचिकित्सा ॥

स्वेदोपनाहनास्निग्धतीक्ष्णस्रंसनवास्तिभिः ।
योगैश्च वातगुल्मोक्तैः श्लेष्मगुल्ममुपाचरेत् ॥ २१

॥ त्रिदोषजगुल्मचिकित्सा ॥

पूतीकपत्रगजचिर्भटचव्यवह्नि-
व्योषं च संस्तरचितं लवणोपधानम् ।
दग्ध्वा विचूर्ण्य दधिमस्तुयुतं प्रयोज्यं
गुल्मोदरश्वयथुपाण्डुगुदोद्भवेषु ॥ २२

शुण्ठीकणामरिचनागदलत्वगेलं
चूर्णीकृतं क्रमविवर्धितभागमन्त्यात् ।
खादेदिदं समसितं गुदजाग्निमान्द्य-
गुल्मारुचिश्वसनकण्ठहृदामयेषु ॥ २३

हिङ्गूग्राम्लपटूषणात्रिलवणक्षिक्षारपाठाशटी-
पथ्यादाडिमधान्यजीरहपुषावृक्षाम्लरुग्दीप्यकैः ।
लुङ्गार्द्रप्लुतमच्छकोष्णजलयुग्गुल्माग्निमान्द्यारुचि-
प्लीहार्शोगलहृद्ग्रहग्रहणिकाऽऽनाहाश्मसर्वार्तिहृत् । २४

॥ रक्तगुल्मचिकित्सा ॥

नार्या लोहितगुल्मिन्या गर्भकालावधेः परम् ।
स्निग्धस्विन्नशरीरायाः कार्यं स्नेहविरेचनम् ॥ २५
शताह्वचिरिबिल्वत्वग्दारुभार्ङ्गीकणोद्भवः ।
कल्कः पीतो हरेद् गुल्मं तिलक्वाथेन रक्तजम् ॥ २६
तिलक्वाथो गुडव्योषहिङ्गुभार्ङ्गीरजोऽन्वितः ।
हितो रक्तभवे गुल्मे नष्टे पुष्पे च योषिताम् ॥ २७
अतिप्रवृत्तमस्रं तु भिन्ने गुल्मे निवारयेत् ।
रक्तगुल्महरैर्योगैर्वातघ्नैः प्रदरोदितैः ॥ २८
वातादीनां स्थिरे गुल्मे कार्यो बाहुसिराव्यधः ।
दाहश्च कफवातोत्थे भिषजा दृष्टकर्मणा ॥ २९
गुल्मी त्यजेदभिष्यन्दि गुरु वैदलमूलकान् ।
शुष्कशाकामिषे स्वादु फलं मन्दाग्नितामपि ॥ ३०

॥ इति विद्रधिगुल्माध्याय एकोनविंशः ॥

अथोदरचिकित्सा नाम

## ॥ विंशोऽध्यायः ॥

मन्दाग्नीनामपथ्यान्नैर्दोषा दुष्टाः प्रकुर्वते ।
स्रोतांसि स्वेदतोयस्य संरुध्योदरमष्टधा ॥
प्राणापानमलासङ्गोऽरत्यग्निबलमन्दता ।
आध्मानं श्वयथुस्तन्द्रा दाहः सर्वोदरे भवेत् ॥ २
रुक्सादाधोगुरुत्वाढ्यं पाणिकुक्ष्यङ्घ्रिशोफकृत् ।
कृष्णसूक्ष्मसिरानद्धं सकासं चात्तिकोदरम् ॥ ३
मृदुशो रुज्वरस्वेदतृण्मूर्छाभ्रमपाकवत् ।
नीलपीतसिराऽऽक्रान्तं सतिक्तास्यं तु पैत्तिकम् ॥ ४
उत्क्लेशगौरवश्वासकासशैत्यारुचिप्रदम् ।
श्लेष्मोदरं स्थिरं स्निग्धं घनं शीतसिरान्वितम् ॥ ५
गरदुष्टाम्बुपानाच्च सन्निपातोदरं भवेत् ।
वाताद्युदरलिङ्गं तत् सर्वरोमनखान्तकृत् ॥ ६
यकृद्दक्षिणतः पार्श्वे वामे प्लीहोदरं भवेत् ।
पित्तश्लेष्म[1]विकाराच्च वातरक्तप्रकोपतः ॥ ७
पक्ष्वालाश्मरुद्धान्नालिप्तान्त्रं मलसंगतम् ।
हृन्नाभि[2]मध्ये वृद्धं स्यात् स्थिरं बद्धगुदोदरम् ॥ ८
[3]सान्नशल्यक्षतान्त्रान्तः स्रुनाहाररसाद्भवेत् ।
छिद्रोदरमधोनाभेर्वृद्धं रुक्तोदशब्दवत् ॥ ९
पीतस्नेहस्य शुद्धस्य शीतवारिनिषेवणात् ।
वृत्तनाभि रवस्निग्ध [4]जलवद् दृतिकोदरम् ॥ १०

---

1. विकारिस्यात् क
2. वृषमदं
3. स्नान
4. जिह्वावद्वृत्ति

आसाध्ये द्वे मते तेषां छिद्रबद्धगुदोदरे ।
शेषाणि कृच्छ्रसाध्यानि जाताम्बूनि तु वर्जयेत् ॥ ११

॥ अथ वातोदरचिकित्सा ॥

स्थिरादिसर्पिषः पानं स्निग्धे स्वेदाविरेचने ।
वेष्टनं [1]वाससा नित्यं [2]साल्वणेनोपनाहनम् ॥ १२
चित्रतैलानुवासः स्यात् स्थिराद्यैस्तु निरूहणम् ।
पेया यूषरसान्नं च योज्यं वातोदरे क्रमात् ॥ १३

॥ सामुद्रादि ॥

सामुद्रसिन्धुरुचकाग्निकणाजमोद
जन्तुघ्नरामठयवाग्रजविश्वचूर्णम् ।
भुक्तं ससर्पिरशने पवनोदरार्शो-
गुल्मात्यजीर्णग्रहणीजरुजाहरं स्यात् ॥ १४

॥ इति वातोदरचिकित्सा ॥

॥ अथ पित्तोदरचिकित्सा ॥

घृतं पित्तोदरे पथ्यं काकोल्यादिसुसाधितम् ।
स्यात् त्रिवृत्त्रिफलासिद्धं पश्चात्सर्पिर्विरेचनम् ॥ १५
यवाद्यम्बुसितासिद्धं निरूहान्वासने घृतम् ।
पायसेनोपनाहोऽस्यात्क्षीरं सिद्धं स्थिरादिना ॥ १६

॥ इति पित्तोदरचिकित्सा ॥

॥ अथ श्लेष्मोदरचिकित्सा ॥

श्लेष्मोदरे कणाऽऽद्याज्यं स्नेहे रेके स्नुहीघृतम् ।
वस्तौ तैलं हितं व्योषमुष्ककाद्यम्बुमूत्रजम् ॥ १७
कुष्ठमूलकबीजाद्यैः सिद्धार्थैरुपनाहनम् ।
व्योषयुक्तं कुलत्थाम्बु पयो वा भोजने हितम् ॥ १८

॥ इति श्लेष्मोदरचिकित्सा ।

1. वातना    2. साशूलेनोप

## ॥ अथ सन्निपातोदरचिकित्सा ॥

सन्निपातोदरे कार्यस्त्वेष मिश्रः क्रियाविधिः ।
सप्तलाशङ्खिनीसिद्धं घृतमत्र विरेचनम् ॥ १९

॥ इति सन्निपातोदरचिकित्सा ॥

## ॥ अथ प्लीहोदरचिकित्सा ॥

स्नेहस्वेदविरेकादि विधेयं प्लीहरोगिणः ।
दध्यन्नभुजि वामाङ्के कूर्पराधः सिराव्यधः ॥ २०
कृमिशत्रुवराव्योषचव्यापाठाग्निसंयुतम् ।
घृतं क्षीरेण संसिद्धं गुल्मप्लीहोदरापहम् ॥ २१
रोहीतकाभयाक्षौद्रवासितं मूत्रमम्बुना ।
पीतं सर्वोदरप्लीहमेहार्शःकृमिगुल्मजित् ॥ २२
पक्वमर्कदलं चूर्णपटुलिप्तं घटाग्निना ।
दग्धं मस्तुयुतं पीतं मन्दाग्निप्लीहहृत्परम् ॥ २३
क्षीरेण प्लीहहृत्कृष्णा क्षारो वाऽम्भोधिशुक्तिजः ।
यकृति प्लीहवत्सर्वं दक्ष[1]हस्तास्रमोक्षणम् ॥ २४

### ॥ नारायणचूर्णम् ॥

यवानी हपुषा धान्यं वराऽजाजिशटीद्वयम् ।
कारवीग्रन्थिकव्योषशताह्वोग्राऽजगन्धिकाः ॥ २५
[2]क्षीरिणीकुष्ठबिल्वाग्निपौष्कराणि पटूनि च ।
द्वौ क्षारौ समभागानि सातला स्याच्चतुर्लवा ॥ २६
विशालात्रिवृते द्व्यंशे दन्ती त्र्यंशा च चूर्णकः ।
नारायणाख्यस्तक्राद्यैः कुष्ठगुल्मोदरार्तिहृत ॥ २७

### ॥ स्नुहीघृतम् ॥

पयस्यष्टगुणे सर्पिःप्रस्थः सस्नुकपयःपलः ।
त्रिवृतः पलषट्केन सिद्धो जठरगुल्मनुत् ॥

1. हस्तिप्र
2. रैदुग्धा

॥ सामान्योपायाः ॥

विशालाशङ्खिनीदन्तित्रिवृन्नीली फलत्रयम् ।
निशा विडङ्गकम्पिल्लं मूत्रेणोदरवान् पिबेत् ॥ २९

सेव्यं जठरिणा युक्त्या कृष्णा स्नुक्क्षीरभाविता ।
पयो वा चव्यदन्त्यग्निविडङ्गव्योषकल्कितम् ॥ ३०

॥ वर्ज्यानि ॥

अम्बुपानं दिवास्वप्नं गुर्वभिष्यन्दि भोजनम् ।
व्यायामं वातविष्टम्भि जठरी परिवर्जयेत् ॥ ३१

॥ इत्युदराध्यायो विंशः ॥

## अथोदावर्तशूलहृद्रोगाम्लपित्तचिकित्सितं नाम

# ॥ एकविंशोऽध्यायः ॥

### ॥ अथोदावर्तचिकित्सा ॥

क्रुद्धः पक्वाशयेऽपानो [1]विण्मूत्रावर्तितो बली ।
ऊर्ध्वगोऽधश्च संरोधी स्यादुदावर्तसंज्ञकः ॥ १
हृत्कुक्षिपार्श्वहृद्वस्तिशूलाध्मानमलग्रहः ।
ज्वरच्छर्दिर्व्यथाऽधैर्यतृष्णाद्यास्तत्कृता गदाः ॥ २
उदावर्तितमभ्यक्तं स्विन्नगात्रमुपाचरेत् ।
वस्तिकाले पुनः स्नेहवस्त्यास्थापनपूर्वकैः ॥ ३
फलधूमबिडव्योषगुडमूत्रैर्विपाचितैः ।
कृताऽङ्गुष्ठसमा वर्तिर्गुदस्थाऽऽनाहशूलनुत् ॥ ४
रामठोग्रामयस्वार्जिबिडभागैर्द्विरुत्तरैः ।
चूर्णमुष्णाम्बुनाऽऽनाहशूलहृद्रोगगुल्मनुत् ॥ ५
त्रिवृत्कणाभयासिन्धु सगुडं विड्विबन्धहृत् ।
वातपित्तकफामघ्नैरद्यात् स्निग्धं द्रवं रसम् ॥ ६

॥ इत्युदावर्तचिकित्सा ॥

### ॥ अथ शूलचिकित्सा ॥

वातोद्धतैर्मलैरेकाद्वित्रिदोषप्रकोपितैः ।
स्वलिङ्गि स्वाश्रये शूलं [2]तत्रान्नद्रवजं त्यजेत् ॥ ७
सौवर्चकाऽम्लिकाऽजाजिमरीचैर्द्विगुणोत्तरैः ।
मातुलुङ्गरसात् पिष्टैर्गुटिकाऽनिलशूलहृत् ॥ ८

---

1. विष्ठोषा  2. स्वभुक्तेऽरुचि

तुम्बुरूण्यभया हिङ्गु पौष्करं लवणत्रयम् ।
पिबेद्यवाम्बुना वातशूलगुल्मापतन्त्रकी ॥ ९
धात्रीरसं विदार्या वा त्रायन्त्या गोस्तनाम्बुना ।
पिबेच्छर्करया क्षौद्रं पित्तशूलप्रमर्दनम् ॥ १०
प्रलिह्य पित्तशूलघ्नं धात्रीचूर्णं समाक्षिकम् ।
शर्करामाक्षिकोपेतं लाजतर्पणमेव वा ॥ ११
वत्स्याब्दाग्न्यभयातिक्ताचूर्णं गोमूत्रसंयुतम् ।
सक्षारं वा पिबेत्काथं बिल्वाद्यैः कफशूलनुत् ॥ १२
रुचकार्द्रकहिङ्गूनां चूर्णं विश्वाम्बुना पिबेत् ।
वातश्लेष्मोत्तरे शूले विड्ग्रहे तु यवाम्बुना ॥ १३
हिङ्गु सौवर्चलं विश्वं विरूपाऽग्नोऽथवाऽभया ।
तद्द्विघ्नोत्तरमुष्णाम्बुपीतं शूलहरं परम् ॥ १४
वृक्षाम्लहिङ्गुलवणत्रयपञ्चकोल-
रुग्जीरयुग्मयवनोषणदाडिमाब्दैः ।
दीप्यान्वितैः सदधि लुङ्गरसेऽष्टनिघ्ने
पक्वं घृतं सकलशूलगुदामयघ्नम् ॥ १५
मिश्रे मिश्रक्रमं कुर्यात्स्वदोषशमनं भवेत् ।
तीव्रशूलार्दितं क्षीणं बद्धविट्कं परित्यजेत् ॥ १६

॥ परिणामान्नद्रवशूले ॥

विदाह्यम्लादिसंक्रुद्धा दोषाः सन्दूष्य पावकम् ।
जीर्यत्यन्ने प्रकुर्वन्ति पक्तिशूलं तु पूर्ववत् ॥ १७
अन्नद्रवो[1]ऽन्नजोऽसाध्यः शूलं सुच्छर्दितवधेः ।
वान्तिमात्रावधेस्तत्राजरत्पित्तं प्रवर्तते ॥ १८
लङ्घनं वमनं रेको वस्तिश्चानुक्रमाद्धितम् ।
पित्तोपशान्तिदं सर्वं पक्तिशूले हितं सदा ॥ १९
हिङ्ग्वग्निरुचकेन्द्राह्वरुबुतैलविषाऽभयाः ।
वरासिन्धुजमूत्राज्यक्षौद्रं वा पक्तिशूलहृत् ॥ २०

1. अन्नजाद्द्रवास्थ्यात्

एरण्डवह्निशम्बूकवर्षाभूगोक्षुराम्लिकाः ।
अन्तर्दग्धाः सहिङ्गूष्णतोयाः शूलहराः पिबेत् ॥ २१
जन्तुघ्नाग्निवराव्योषचव्यैर्मण्डूरकं समम् ।
चतुर्निघ्ने गुडे द्विघ्ने मूत्रे तत्पिण्डवत्पचेत् ॥ २२
कर्षार्धं भोजनाद्यन्तमध्येऽद्यात्पक्तिशूलहृत् ।
मन्दाग्निग्रहणीपाण्डुक्षयार्शःक्रिमिगुल्मनुत् ॥ २३

॥ इति शूलचिकित्सा ॥

## ॥ अथ हृद्रोगचिकित्सा ॥

वातादिभिस्त्रिभिर्दोषैः क्रिमिभिश्च स्वलिङ्गवान् ।
हृद्रोगः पञ्चधा शूली कण्डूयुक्तश्च जन्तुजः ॥ २४
शुण्ठी सौवर्चलं हिङ्गु दाडिमं साम्लवेतसम् ।
पीतमुष्णाम्बुना वातहृद्रोगश्वासशूलनुत् ॥ २५
[1]सेकलेपौ हिमौ पैत्ते तिक्तायष्टिसिताः पिबेत् ।
घृतमिश्रो रसे सिद्धं द्राक्षया वा स्थिरादिना ॥ २६
कृष्णाशटीवरारास्नाशुण्ठीपथ्याः सपौष्कराः ।
चूर्णिता वासिता मूत्रे पातव्याः कफहृद्रदे ॥ २७
सर्वतो लङ्घनं पूर्वं यथादोषं क्रिया मताः ।
क्रिमिजे तु पिबेन्मूत्रविडङ्गामयसैन्धवम् ॥ २८

॥ इति हृद्रोगचिकित्सा ॥

## ॥ अथाम्लपित्तचिकित्सा ॥

अम्लपित्तं भवेद्दोषैः पित्तोल्बणमलान्वितैः ।
साम्लोद्गारास्यतिक्तत्वं दोषलिङ्गं भवेत्ततः ॥ २९
वान्तिं लघु च रेकादि कफपित्तहरैर्भजेत् ।
वरानिम्बपटोलाम्बु सक्षौद्रं पाचनं निशि ॥ ३०
खदिरत्रिफलारिष्टवासाच्छिन्नापटोलजः ।

1. एषु लेपो हिमो

क्काथोऽम्लपित्तविस्फोटमसूरीकुष्ठहृत्परः ॥ ३१

पृथग्द्राक्षागुडक्षौद्रैः पथ्या स्यादम्लपित्तहृत् ।

तद्वद् गुडाभया कृष्णा स्यान्निम्बामलकं त[illegible] ३२

क्षीरे चतुर्गुणे सर्पिर्वराकल्कश्रृतं हितम् ।

तथा प्रातः कणाक्काथकल्कपक्वं मधूत्कटम ॥ ३३

॥ इत्युदावर्तशूलहृद्रोगाम्लपित्ताध्याय एकविंशः ॥

## अथ वातरोगचिकित्सितं नाम

# ॥ द्वाविंशोऽध्यायः ॥

अशीतिर्वातरोगाः स्युः स्वलिङ्गास्तत्प्रकोपणैः ।
स्निग्धोष्णाद्यैश्च जेतव्या विशेषात् किञ्चिदुच्यते ॥ १

आक्षेपको मुहुः क्षेपाद्धनुःस्तम्भस्तदानतिः ।
कृत्स्नदेहार्धहृत्कारी पक्षाघातो निगद्यते ॥ २

सशूलकुञ्चितांसस्य सिरास्थादपबाहुकम् ।
गृध्रसी सक्थिकर्मघ्नो बाह्वोः स्याद्विश्वचीति सा ॥ ३

सनेत्रवैकृतं वक्रं वक्त्रार्धं स्यात्तदर्दितम् ।
वातास्रसंभवः शोफो जानुस्थः क्रोष्टुशीर्षकम् ॥ ४

वाताद्दीर्घाऽष्ठिला तिर्यक् प्रत्यष्ठीला तु रोधिनी ।
व्यथा वस्तेरधस्तूनी प्रतूनी तूर्ध्वगा गुदात् ॥ ५

कराङ्घ्रिमोटिनी खल्ली गुल्फरुग्वातकण्टकम् ।
स्थाननामानुरूपाख्या ज्ञेया वातगदाः परे ॥ ६

शूनं सुप्तत्वचं भग्नं कम्पाध्मानार्तिरुग्युतम ।
क्षीणमांसबलं हन्याद्वातव्याधिश्चिरोत्थितः ॥ ७

रास्नाविश्वामृतैरण्डदारुक्वाथोऽत्र पाचनः ।
पेयः सर्वाङ्गजे वाते सामे सन्ध्यस्थिमज्जगे ॥ ८

रास्नावीरतरुच्छिन्नादारुकृष्णविश्वसैन्धवैः ।
सैरण्डैर्मोदको द्विघ्नगुडाज्यैः सर्ववातहृत् ॥ ९

॥ त्रयोदशाङ्गगुग्गुलुः ॥

आभाऽश्वगन्धाहपुषागुडूची-
शतावरीगोक्षुरकाः सरास्नाः ।
श्यामाशटीघोषवतीयवानी-
विश्वान्विताश्चेति समांशचूर्णम् ॥ १०

तत्कौशिके सर्वसमे घृतार्धे
क्षिप्त्वा प्रमृग्याक्षमितं प्रदत्तम् ।
मद्येन मांसेन रसेन वाऽथ
क्षीरेण वा कोष्णजलेन वाऽपि ॥ ११
रोगाञ्जयेद्वातकफानुविद्धान्
सर्वाङ्गसन्ध्युद्भवभङ्गशूलान् ।
समस्तहन्वाश्रितसर्ववाते
त्रयोदशाङ्गः प्रवरः पुरः स्यात् ॥ १२

## ॥ रसोनयोग ॥

रसोनार्धपलं हिङ्गुव्योषद्विपदुजीरकैः ।
माषै[1]युग्मबुतोयेन मासात्सर्वार्तिशूलहृत् ॥ १३

## ॥ रास्नादिघृतम् ॥

रास्नाविश्वाशटीदन्तीपिप्पलीपौष्करैर्युतम् ।
जले पक्वं घृतं भुक्तं सर्ववातामयापहम् ॥ १४

## ॥ नारायणतैलम् ॥

बिल्वस्योनाकशोणाग्निबृहतीद्वयपाटलाः ।
सारिणीपारिभद्राश्वगन्धागोक्षुरका जया ॥ १५
द्विपलानां चतुर्द्रोणजलक्वाथार्मणे पचेत् ।
तैलाढकं वरीद्रावाढकं क्षीरार्मणान्वितम् ॥ १६
मिशिदारुनतैलारुङ्मांसीशैलेयचन्दनैः ।
चतुष्पर्णीवचारास्नाऽश्वगन्धासिन्धुबीजकैः ॥ १७
द्विकर्षैः कल्कितं सिद्धं तैलं नारायणोदितम् ।
अभ्यङ्गबस्तिपानाद्यैः सर्ववातार्तिहृत्परम् ॥ १८
हितं भङ्गेऽन्त्रवृद्धौ च वातरक्ते हनुग्रहे ।
वाङ्मेधाबलवीर्यायुःपुत्रदः सुरपूजितः ॥ १९

1. युग्मारुतोयान्त

॥ वरीतैलम् ॥

भद्रारुद्रबिडप्रियङ्गुतगरत्वक्पत्रकौन्तीनखै-
मांसीसर्जरसाम्बुचन्दनवचाशैलेयलामज्जकैः ।
मञ्जिष्ठासरलागुरुद्विपबलारास्नाऽश्वगन्धावरी-
वर्षाभूमिशितिन्दुभिः समधुरैर्द्रव्यैः सुकल्कीकृतैः ॥
तोये क्षीरशतावरीरससमे तैलं विपक्कं मृदु
स्याद्वातघ्नमिदं नृणामिति वरीतैलं भिषक्पाचितम् ।

॥ सरण्यादितैलानि ॥

तद्वद्दुग्धसमन्वितानि सरणीशैलेयरास्नाऽमृता-
वाट्यानां कथिते श्रुतानि च पृथक् तैलानि भद्रादिभिः ॥ २१

॥ बलातैलम् ॥

भागाः षट् [1]पयसो बलाकृतरसात् षट् तैलभागोऽशकः
स्यात्काथाच्च कुलत्थकोलयवयुक्तात् पञ्चमूलीद्वयात्[2] ।
[3]प्राक्कल्कैः सहितं श्रुतं पवनजित्तैलं बलाऽऽख्यं हितं
सूताबालकृशेषु योनिगदहृद्भूतज्वरोन्मादनुत् ॥ २२

॥ माषादितैलम् ॥

माषातसीयवकुरण्टककण्टकारि-
गोकण्टतिन्दुकजटाकपिकच्छुतोयैः ।
कार्पासकास्थिशणबीजकुलत्थकोल-
काथेन छागलपयःप्रबलेन वाऽपि ॥ २३
शुण्ठीबलामिशिसरण्यमृतोरुबूकै
रास्नाकणामृगमदैः सपुनर्नवैश्च ।
तैलं श्रुतं हरति [4]पानविलेपनस्यै
रुक्कम्पशोफधनुराढ्यरुजोऽनिलादीन् ॥ २४

---

1. च युतात्
2. भवान्
3. कुल
4. क्लिस

## ॥ कुम्भीतैलम् ॥

कुम्भीयवानीविषमुष्टिशिग्रु-
प्रसारिणीभानुजयाकषाये ।
पक्वं सदारूषणपञ्चकोल-
तैलं प्रलेपात्सकलानिलघ्नम् ॥ २५

## ॥ धनुर्वातादिचिकित्सा ॥

स्यादाक्षेपकहृज्ज्वरे: प्राङ् मस्तु सवचोषणम् ।
धनुर्वाते तु पुन्नागदलं चोचाम्बुनस्यकम् ॥ २६
पक्वं च दशमूलाम्बु हिङ्गुसैन्धवयुक् पिबेत् ।
माषक्वाथबलाकच्छुनस्यं स्यादपबाहुके ॥ २७
गृदस्याङ्गुल्यजा वेध्या शिरा मेध्या कनिष्ठका । (?)
विश्वाच्यां वातहृत्कार्यं नस्यं चेवावबाहुके ॥ २८
माषाज्यक्षीरभुग्रात्रौ दशमूल्यम्बुपोऽर्दिते ।
कोष्टुशीर्षे विमुक्तास्रः स्यात् क्षीरोरुबुतैलपः ॥ २९
प्रत्यष्ठीलाऽष्ठीलिकयोर्हिङ्ग्वादिं कोष्णवारिणा ।
भजेत् तूनीप्रतून्योश्च तथा कृष्णाऽऽदिजं रजः ॥ ३०
त्वक्पत्रागुरुरास्नारुक्शिग्रुग्रामिशिकाञ्जिकैः ।
मर्दनं पक्वतैलं वा विश्वाचीखल्लिहृत्परम् ॥ ३१
विश्वाच्यां वातकण्टाख्ये हर्षे दाहे च पादयोः ।
सिरा वेध्या निजा कार्यः सामान्यो वातहा विधिः ॥ ३२

## ॥ अथोरुस्तम्भचिकित्सा ॥

श्लेष्ममेदोऽन्वितो भूत्वा वायुरूरुद्वयाश्रितः ।
ऊरुस्तम्भं करोत्युग्रं सादगौरवरूपिणम् ॥ ३३
तत्र रक्ष्यं बलं रूक्षस्तार्यैस्तोये कफे गते ।
पश्चाद्वातविनाशाय कृत्स्ना कार्या क्रिया यथा ॥ ३४
त्रिफलाचव्यकटुकाग्रन्थिकं मधुना लिहेत् ।
ऊरुस्तम्भविनाशाय पुरं मूत्रेण वा पिबेत् ॥ ३५

॥ इत्यूरुस्तम्भचिकित्सा ॥

## ॥ अथामवातचिकित्सा ॥

मन्दाग्नेर्वातयुक्तामादामवातो भवेदिह ।
त्रिकार्तिर्जडता स्तब्धगात्रता सन्धिशोफता ॥ ३६

## ॥ सामान्योपायाः ॥

लङ्घनः पञ्चकोलाम्बु पाचनं दीपनं भजेत् ।
सधाऽप्यैरण्डजं तैलं सेव्यं क्षीरादि वर्जयेत् ॥ ३७
काञ्जिके नागरेणाज्यं सिद्धं स्यादामवातहृत् ।
तत्क्षीराञ्जनमुस्ताढ्यं पुष्टिस्तम्भाग्निकृत्क्रमात् ॥ ३८
तथा पुनर्नवाक्वाथो मिशीविश्वशटीयुतः ।
शटीवचाऽभयाविश्वदेवाह्वातिविषाशृतः ॥ ३९
क्वाथः पेयोऽत्र सप्ताहाद्भोजनं षाष्टिकौदनम् ।

## ॥ रास्नादिक्वाथः ॥

रास्नाऽमृतावचैरण्डदारुशम्याकगोक्षुरैः ॥ ४०
क्वाथः स्याद्विश्वयुक्पृष्ठत्रिकजङ्घोरुशूलनुत् ।

## ॥ अजमोदाद्यं चूर्णम् ॥

अजमोदाविडङ्गाग्निमिशिग्रन्थिकणोषणाः ॥ ४१
ससिन्धुदारु तुल्यांशं पञ्चभागा हरीतकी ।
दशांशे वृद्धदारार्द्रे चूर्णमुष्णाम्बुना पिबेत् ॥ ४२
कफामवातरक्तानि [1]गृध्रसीविश्वचीर्हरेत् ।

## ॥ वैश्वानरचूर्णम् ॥

[2]सिन्धुजीराजमोदोषगौषधैश्चाभयासमैः ॥ ४३
एकद्वित्रिचतुःपञ्चभागैर्वैश्वानरं पिबेत् ।
तक्रोष्णाम्लारनालाद्यैरामवातार्तिगुल्मनुत् ॥ ४४

॥ इत्यामवातचिकित्सा ॥

---

1. गृद्ध्री
2. सिन्धुविश्वाजमोदाख्यैः समागध्यभयैः क्रमात् ।
द्विपञ्चत्रिद्विसर्वाद्यैश्चूर्णं वैश्वानरं पिबेत् ॥

## ॥ अथ वातरक्तचिकित्सा ॥

दुष्टं पित्तकफै रक्तं सवातं सुखिनोऽङ्घ्रिगम् ।
कार्ष्ण्यशोषाङ्गसन्ध्यर्तिकण्डू[1]विस्फोटसुप्तिकृत् ॥ ४५
बहुशो वातरक्तेन दोषलिङ्गं करादिगम् ।
रक्तत्वसुप्तिवैवर्ण्यमण्डलं स्फुटितं स्रुतम् ॥ ४६
शिरोग्रहाङ्गवक्रत्वभेदतोदविसर्पकैः ।
ज्वरकम्पभ्रमश्वासैस्त्याज्यं तद्वत् त्रिदोषजम् ॥ ४७
तत्रासृङ्मोक्षणं स्निग्धे कार्यं वातोत्तरादृते ।
यथादोषं सुकर्तव्यं पञ्चकर्माश्रयः क्रमः ॥ ४८
धान्यविश्वामृताक्वाथो वातास्रे पाचनं निशि ।
तथा छिन्नेक्षुरक्वाथः सकणः शमनाय च ॥ ४९

### ॥ नवाङ्गक्वाथः ॥

त्रिफलानिम्बमञ्जिष्ठादार्वीतिक्ताऽमृतावचाः ।
एषां क्वाथो नवाङ्गोऽयं वातशोणितकुष्ठहृत् ॥ ५०

### ॥ लाङ्गल्यादिवटी ॥

लाङ्गलीत्रिफलालोहव्योषच्छिन्नापुरैः समैः ।
द्राक्षालुङ्गवरातोयभावितैः कोलसंमिता ॥ ५१
मधुना वटिका हन्यात् सत्वरं वातशोणितम् ।

### ॥ पिण्डतैलम् ॥

शारिवा[2]सर्जमञ्जिष्ठायष्टिसिक्थैः पयोऽन्वितम् ॥ ५२
तैलं पक्वं तु पिण्डाख्यं लेपाद्वातास्रजित्परम् ।

### ॥ सामान्योपायाः ॥

तथा छिन्नाकषायेण पिप्पलीवर्धमानकम् ॥ ५३
सर्पिः पक्वं वरीकल्करसाभ्यां वातरक्तजित् ।
रक्ते स्वदोषहृत्सेव्यं त्याज्यं कुष्ठोदितं सदा ॥ ५४

---

1. पेटकनाह  2. वज्र

भास्करक्षीरसर्जाज्यगुडैर्भागोत्तरैर्युतैः ।
पुञ्जगैर्धान्यसंपक्वैर्लेपोऽङ्घ्रिस्फुटनापहः ॥
शुक्तिक्षाराज्यसिन्धूत्थं शतधौतघृतं तथा ।
चोचात्सतण्डुलात्पूतिगर्भं वाऽङ्घ्रिमृदुत्वकृत् ॥

॥ इति वातरोगाध्यायो द्वाविंशः ॥

## अथ कुष्ठश्वित्रादिचिकित्सितं नाम

# ॥ त्रयोविंशोऽध्यायः ॥

क्रुद्धा दोषास्त्वगादिस्थाः कुर्युः कुष्ठं स्वलिङ्गवत् ।
दशाद्यानि (?) त्रिजं सोपद्रवमस्थ्यादिगं त्यजेत् ॥ १
औदुम्बरं तथाभासं श्वित्रं स्याच्छुक्तिसन्निभम् ।
काकणं पक्वगुञ्जाऽऽभं चर्माख्यं गजचर्मवत् ॥ २
पुण्डरीकं स्वसंज्ञाभमृष्यजिह्वं तु वर्जयेत् ।
बहुव्रणं शतारु स्यात् कपालं [1]परुषं तनु ॥ ३
पाणिभेदं चर्मदलं पादस्फोटो विपादिका ।
मण्डलं पटलं स्निग्धं कण्डूर्गण्डोऽसृजाऽलसम् ॥ ४
किटिभं किणवच्छ्यामं दद्रू[2]स्तु पिडकोच्चयः ।
तुम्बीपुष्पसमं सिध्मं कण्डूशुष्कारुणं मतम् ॥ ५
श्वेतारुणघनस्फोटा पामा स्रावे विचर्चिका ।

### ॥ त्वगादिगतकुष्ठे ॥

वैवर्ण्यं रूक्षता त्वक्स्थे कुष्ठेऽस्मिन् लेपशोधने ॥ ६
स्वेदविस्रावशोफाश्च रक्तगेऽत्रास्रमोक्षणम् ।
मांसगेऽङ्घ्रिकरस्फोटश्चात्र क्वाथाश्च रेचनाः ॥ ७
क्षतव्याधिश्च मेदःस्थे कौण्यं [3]चात्र यथोदितम् ।
अस्थ्नि घ्राणाक्षिवैरूप्यं मज्ज्ञि वैस्वर्यजन्तुकृत् ॥ ८
शुक्रगेऽपत्यकुष्ठित्वं [4]साध्यं त्वग्रक्तमांसगम् ।
शस्त्रक्षारौ प्रसुप्तेऽलै स्थिरोस्यान्मन्त्रवद्विषम् ॥ (?) ९

---

1. सषकं वनम् ।
2. पेटककोच्चयः ।
3. चैताङ्क्रिघोदित ।
4. साद्य सम्यक् धृतं जयेत् ।

॥ वज्रकघृतम् ॥

पटोलत्रिफलाऽरिष्टगुडूचीधावनीवृषैः ।
सकरञ्जैर्घृतं पक्वं कुष्ठहृद्वज्रकं पिबेत् ॥ १०

॥ महातिक्तघृतम् ॥

भूनिम्बत्रिफलोशीरप ठाऽरिष्टाब्दयासकाः ।
मधुकं शारिबा तिक्ता त्रायन्तीचन्दनामृताः ॥ ११
कृष्णापद्मकषड्ग्रन्थाविशालेन्द्रयवा वृषः ।
मूर्वापटोलशम्याकपर्पटातिविषानिशाः ॥ १२
सप्तच्छदशतावर्य इत्येषां कल्कसंयुतम् ।
सर्पिरष्टगुणे तोये द्विगुणामलकीरसे ॥ १३
साधितं वातपित्तोत्थकुष्ठविस्फोटपाण्डुजित् ।
महातिक्तं ज्वरोन्मादगण्डमालाऽपहं स्मृतम् ॥ १४

॥ पटोलादिघृतानि ॥

घृतं सिद्धं पटोलेन दार्व्या वा खदिरेण वा ।
निम्बेन वा प्रयोक्तव्य कुष्ठे पित्तासृगुत्तरे ॥ १५

॥ माणिभद्रवटकः ॥

क्रिमिघ्नामलपथ्याख्यैः पालिकैस्त्रिवृतासमैः ।
[1]द्विषट्पलगुडैस्त्रिंशद्वटका माणिभद्रकः ॥ १६
कुष्ठशोथोदरश्वासपाण्डुवर्शोज्वरगुल्मिनाम् ।
भगन्दरविषार्तानां हितोऽयं माणिभद्रकः ॥ १७

॥ लेपयोगाः ॥

कुष्ठसैन्धवसिद्धार्थक्रिमिघ्नेन्द्रयवैः समैः ।
दद्रूमण्डलकुष्ठघ्नं लेपनं काञ्जिकान्वितम् ॥ १८
विस्फोटालसकघ्नः स्याल्लेपोऽश्वत्थकणोषणैः ।
दद्रूकिटिभकुष्ठघ्नं कासमर्दाम्ललेपनम् ॥ १९

1. संषट्पल

लेपः सिध्महरो यावशूकगन्धाम्लकैः कृतः ।
तथा कण्डूहरो लाक्षादधिदद्रुघ्नजीरकैः ॥ २०
सिन्दूराव्योषणैर्लेपो हन्यात्पामाविचर्चिके ।
राजिकान्ता त्रिभस्मा[1]म्लधूमश्चेति विचर्चिकाम् ॥ २१
लाङ्गलीसूरणं श्वेतां पिष्ट्वाऽस्पर्शं प्रलेपयेत् ।
पुरगन्धाभयाकुष्ठसर्षपार्कहयारिभिः ॥ २२
साश्वत्थशिग्रुभृङ्गाख्यैर्लेपस्त्वग्दोषरक्तजित् ।

॥ हयारितैलम् ॥

हयारिवाजिगन्धेन्द्राकाकाख्यातिक्तगन्धकैः ॥ २३
तैलमार्करसे तुल्ये पक्वमस्पर्शनाशनम् ।

॥ वज्रकतैलम् ॥

वज्रं निशाचित्रकसप्तपर्ण-
कुष्ठाश्वमारद्रुमसिन्धुमूत्रे ।
तैलं पचेन्मण्डलदद्रुकण्डू-
दुष्टव्रणास्राक्रिपडकापहारि ॥ २४

॥ सामान्योपायाः ॥

काकोदुम्बर्यरिष्टाब्दव्योषजन्तुघ्नकल्कितः ।
हन्ति वृक्षकजः क्वाथः पीतः सर्वत्वगामयान् ॥ २५
गुडूचीत्रिफलादार्वीक्वाथमूत्रोष्णवारिभिः ।
त्वग्दोषशोफपाण्डुघ्नः पीतो मासेन गुग्गुलुः ॥ २६
लेहः क्षौद्रवराव्योषभल्लातव्यासितातिलैः ।
वृष्यः सप्तसमो मेध्यः कुष्ठहा कामचारिणः ॥ २७
विडङ्गाग्निसितातैलधात्रीमण्डूरपिप्पलीः ।
प्रलिह्य सर्वकुष्ठानि जयत्यतिगुरूण्यपि ॥ २८
अभयातिलभल्लातं कुष्ठार्शोघ्नं गुडान्वितम् ।
गुडोऽरुष्करजन्तुघ्नसोमराजीयुतस्तथा ॥ २९

1. अस्मदूम्लैः

गोमूत्रस्था त्रिसप्ताहं वाकुचीखदिरासनैः ।
भाविता साऽभया लेहः क्षौद्रे स्यात्सर्वकुष्ठहृत् ॥ ३०

॥ निम्बादिचूर्णम् ॥

निम्बपञ्चाङ्गद्विभागा वराव्योषामृतासिताः ।
पाठेन्द्रयवकुष्ठाग्निव्रह्मीभल्लातगोक्षुरान् ॥ ३१
मुसलीद्विनिशावेल्लोहारग्वधबाकुचीः ।
चक्रमर्दं च तुल्यांशान् निम्बक्वाथेन भावयेत् ॥ ३२
मार्कवस्वरसैश्चास्य कर्षं शुद्धः क्रमात् पिबेत् ।
खदिरासनतोयेन त्वद्यात् स्निग्धं हितं लघु ॥ ३३
वातास्त्रं सर्वकुष्ठानि विसर्पप्रदरव्रणान् ।
विषविस्फोटमर्शांश्च हन्याद् वृष्यं रसायनम् ॥ ३४

॥ अथ श्वित्राचिकित्सा ॥

अक्षफल्गुकषायेण बाकुचीं सगुडां पिबेत् ।
घर्मस्थः स्फोटवान् श्वित्री तान् भित्त्वा लेपनैर्जयेत् ॥ ३५
पुत्रकोषणकासीसतूलताप्यमनःशिलाः ।
सप्ताहं कांस्यगा लेपः श्वित्रेऽद्यान्मूत्रबाकुचिम् ॥ ३६
गन्धकाश्वत्थरुचकश्वेतसूरणटङ्कणाः ।
तिलपुष्पं च तत्क्षारः सप्तधा गोजलाप्लुतः ॥ ३७
तत्कर्षं मण्डलश्वित्री तैलाक्तोऽद्यात्खरातपे ।
त्रिः कृते प्रतिनाड्येवं स्फोटाः स्युस्तान्वरोदकैः ॥ ३८
सिञ्चेत्तुर्यदिनालिप्ते निशातण्डुलताळकैः ।
गोतक्रकोद्रवान्नाशी सप्ताहाच्छ्वित्रजिद् ध्रुवम् ॥ ३९
प्रलेपोद्वर्तनस्नानपानभोजनकर्मणा ।
सेवितं खादिरं वारि सर्वत्वग्दोषनाशनम् ॥ ४०

मांसेक्षुतैलं च कुलत्थमाष-
विदाह्यभिष्यन्दिपयोदधीनि ।
निष्पावपिष्टाद्यशनं शुनिद्रां
त्वग्दोषवान् क्षीलवणे च जह्यात् ॥ ४१

वत्सरार्धादसृङ्मोक्षो भूयो मासाद्विरेचनम् ।
पक्षाद्वान्तिस्त्र्यहान्नस्यं प्रदेहः कुष्ठिनां सदा ॥ ४२

॥ शीतपित्तोदर्दचिकित्सा ॥

[1]मण्डलैः कण्डुमाद्भिर्यैः शोफो दाहेन पित्तजः ।
सवाते शीतपित्तानि ; [2]उदर्दस्तु कफात्मके ॥ ४३
तत्राशु वमनं कार्यं बुद्ध्याऽऽवस्थं विरेचनम् ।
अभ्यङ्गः कटुतैलेन स्वेदश्चोष्णेन वारिणा ॥ ४४
सर्पिः पीत्वा महातिक्तं कार्यं रक्तविमोक्षणम् ।
पिप्पलीवर्धमानं वा रसोनं वा प्रयोजयेत् ॥ ४५
अश्वगन्धाबलारास्नायवानीदारुसैन्धवैः ।
सगुडैर्मोदका भक्ष्याः शीतपित्तादिशान्तये ॥ ४६
सिद्धार्थरजनीसिन्धुप्रपुन्नाटतिलैस्समैः ।
कटुतैलेन संमिश्रैरेतदुद्वर्तनं हितम् ॥ ४७
एरण्डमूलयूषेण कुलत्थेन रसेन वा ।
भोजनं सर्वदा कार्यं यथादोषं सुशीतलम् ॥ ४८

॥ इति कुष्ठश्वित्रादिरोगाध्यायस्त्रयोविंशः ॥

---

1. मङ्गलैर्गण्डमद्भिर्यैः    2. उद्दूस्तु

# अथ शोफश्लीपदस्थौल्यचिकित्सितं नाम

# ॥ चतुर्विंशोऽध्यायः ॥

## ॥ अथ शोफचिकित्सा ॥

उष्णाम्भसा दारुपथ्ये सशुण्ठीं च पुनर्नवाम् ।
पिबेद् भूनिम्बविश्वाभ्यां क्वथं च सपुनर्नवम् ॥ १
कृष्णाद्वयनिशापाठाक्षुद्राग्रन्थ्यब्दजीरकम् ।
साग्निविश्वं कवोष्णाम्बुपीतं शोफहरं परम् ॥ २
क्षीरं शोफहरं दारुवर्षाभूनागरैः श्रृतम् ।
पीतं तथाऽर्कवर्षाभूनिम्बक्वाथेन सेवितम् ॥ ३
वर्षाभूविश्वकल्केन दशमूलजले श्रृतम् ।
घृतं निहन्याच्छ्वयथुं ग्रहणीं सामतामपि ॥ ४
शुष्कमूलकवर्षाभूदारुरास्नामहौषधैः ।
पक्कमभ्यञ्जनात्तैलमसाध्यं श्वयथुं जयेत् ॥ ५
नवान्नशुष्कशाकस्त्रीधानामद्यविदाहियुक् ।
श्लेष्मलं श्वयथौ त्याज्यं कफमेदोहरं भजेत् ॥ ६

॥ इति शोफचिकित्सा ॥

## ॥ अथ श्लीपदचिकित्सा ॥

[1]मेदोमांसाश्रयः शोफः श्लीपदं ज्वरसादकृत् ।
पादे हस्ते स्तने घ्राणे दोषैः स्याद्दोषलिङ्गि च ॥ ७
श्लेष्मान्वितं
असाध्यं स्याद्वल्मीकाकृतिभिश्चितम् ।
स्वेदोपनाहसेकादि शोफोक्तं चात्र कारयेत् ॥ ८

---

1. स्वेदास्ये

धत्तूरैरण्डनिर्गुण्डीवर्षाभूशिग्रुसर्षपैः ।
दारुणं श्लीपदं हन्याल्लेपो वा रूपिकाऽङ्घ्रिजः ॥ ९

॥ इति श्लीपदचिकित्सा ॥

## ॥ अथ स्थौल्यचिकित्सा ॥

अव्यायामदिवास्वप्नश्लेष्मलाहारसेविनः ।
मधुरोऽन्नरसस्नेहः प्रायो मेदो विवर्धयेत् ॥ १०
*मेदसा श्वासमूर्छाऽहःस्वप्नकम्पनशब्दयुक् ।
सक्षुधास्वेददौर्गन्ध्यः स्थूलः स्फुरदुरःस्तनः ॥ ११
कुलत्थचूर्णशामाकयवमुद्गमधूदकम् ।
तक्रं श्लेष्मघ्नसंशुद्धी मेदोघ्नं चात्र शस्यते ॥ १२
विडङ्गं नागरं क्षारः काललोहरजो मधु ।
यवामलकचूर्णं च योगोऽतिस्थौल्यदोषजित् ॥ १३

### ॥ व्योषादिगुग्गुलुः ॥

व्योषा[1]ग्निमुस्तत्रिफलाविडङ्गैर्गुग्गुलुं समम् ।
[2]खादन् सर्वाञ्जयेद्व्याधीन् मेदःश्लेष्मामवातजान् ॥ १४

---

* " वर्त्मातिमलनेत्रेषु शोथितृट्दादिमन्थकः ।
नेत्रे प्रकोपाकोपापस्स्वेतास्वयोंग्रजद्रवम ॥
अश्वत्थवल्कले पञ्चसंख्येये तैलतूर्णिकम् ।
अभिष्यन्दशितालोध्रसिन्धुना नागरेण वा ॥
पुराणं वार्तिकोतम्नं स्वेको बिल्वादिनाम्भसा ।
यष्टिदार्वीसिता क्षौद्रचन्दनारिष्टसैन्धवैः ॥
पिष्टैः सिताम्भसोपेतैः सेकलेपाञ्जनं हितम् ।
कार्षिको धूमसिद्धार्थौ निशिद्वेक्षफलान्वितम् ॥
निम्बपक्वं शिरीषज्ये सेकलेपैः कपोत्थितै ।
किरीटत्रिफलायष्टि शर्कराश्वत्थमुस्तकैः ॥"
हस्तलिखितपुस्तकस्थोऽयं भागोऽप्राकरणिकः प्रतिभाति ॥

1. अग्निमन्थ 2. स्वेदनः समजये

॥ सामान्योपायाः ॥

पुनर्नवाऽभयादारुच्छिन्नामूत्रपुरान् पिबेत् ।
पाण्डुशोफोदरस्थौल्यत्वग्दोषार्शःकफामये ॥ १५

विशेषात् पद्मकोशीरलोध्रैर्लेपोऽङ्गगन्धहृत् ।
वर्णकृद् दाडिमाम्लत्वङ्निम्बाज्येन्दुमधूनि च ॥ १६

पुरमांस्यभयासर्जं लाक्षाशैलेयकं घनम् ।
नखं कुष्ठं पदे वृद्धं धूपोऽर्कांशगुडो वरः ॥ १७

॥ इति शोफश्लीपदस्थौल्यरोगाध्यायश्चतुर्विंशः ॥

॥ इति श्रीविष्णुभट्टसुतपण्डितदामोदरविरचितायां
आरोग्यचिन्तामणिसंहितायां निदान-
कायचिकित्साख्यं स्थानद्वयम् ॥

## अथ शालाक्यतन्त्रं नाम

# ॥ पञ्चविंशोऽध्यायः ॥

### ॥ अथ नेत्ररोगचिकित्सा ॥

वातपित्तकफाद्रक्तादभिष्यन्दश्चतुर्विधः ।
पिष्टैः सिताऽम्बुना सेको लेपो वा रक्तजे हितः ॥ १

लोध्रयष्टिसितादार्वीतार्क्ष्यशैलैरजापयः ।
दार्वीक्वाथश्च सक्षौद्रः सर्वाभिष्यन्दशान्तिकृत् ॥ २

कोलीहयाजविड् धूमः कांस्यघृष्टकणान्वितम् ।
नवनीतं दृशि क्षिप्तं सर्वाभिष्यन्दहृत्परम्[1] ॥ ३

रसाञ्जनाभयादार्वीगैरिकैः सैन्धवान्वितैः ।
तोयपिष्टैर्बहिर्लेपः सर्वनेत्रामयापहः ॥ ४

सिन्धुराज्यभयालोध्रैर्घृतभृष्टैर्लवोत्तरैः ।
सौवीरपिष्टैरश्वत्थैर्धूपितैरक्षिमण्डनम् ॥ ५

अधोमध्येषु सर्वेषु ललाटे व्यधयेत्सिराम् ।
यथोक्ता च प्रयोक्तव्या स्वाभिष्यन्दोचितक्रिया ॥ ६

कृष्णभागे सितं बिन्दुं शुक्रं विद्यात्कफात्मकम् ।
रक्तं तु शुक्लभागस्थमर्जुनं शोणितोद्भवम् ॥ ७

समुद्रफेनदक्षाण्डत्वक्सिन्धूत्थैः सशङ्खजैः ।
शिग्रुबीजयुता वर्तिः शुक्रादीन् शस्त्रवल्लिखेत् ॥ ८

चन्दनं सैन्धवं पथ्या पलाशतरुशोणितम् ।
क्रमवृद्धमिदं चूर्णं शुक्राम्लादिविलेखनम् ॥ ९

शङ्खं क्षौद्रेण संयुक्तं कतकं सैन्धवेन वा ।
सितयाऽर्णवफेनो वा पृथगञ्जनमर्ज्जुने ॥ १०

---

1. गदम्

जातिपत्ररसक्षौद्रनिशाद्वयं साञ्जनम् ।
क्षुद्रमत्स्यमषीकणमलक्षौद्रं निशाऽऽन्ध्यहृत् ॥ ११
शिलारसाञ्जनव्योषगोपित्तैरञ्जनं भवेत् ।
पित्तघ्नं छागमूत्रेण भावितं देवदारु च ॥ १२
आलदारुत्वचाः पिष्ट्वा सुरसापिष्टवारिणा ।
छायाशुष्का कृता वर्तिर्वर्त्मशुष्कत्वनाशिनी ॥ १३

## ॥ चन्द्रप्रभावर्तिः ॥

शङ्खाक्षमज्जाञ्जनशिग्रुबीज-
मनःशिलायष्ट्यभयाऽऽजदुग्धैः ।
चन्द्रप्रभेयं पटलार्बुदार्म-
राज्यन्धकाचारुणतैमिरघ्नी ॥ १४

## ॥ तिमिरचिकित्सा ॥

जलधूम्रदीपपीतं स्निग्धश्वेतं सुलोहितम् ।
पश्येद्दोषास्रुक् मन्दं तिमिरं तच्चतुर्विधम् ॥ १५
तिमिराण्यतिवृद्धानि काचः स्याद्दृग्गृहा दृशि ।
कफजः शङ्खमाभ्यः स्यात्स्तार्यमक्षयो दृगङ्कुरः ॥ १६
अक्षास्थिमध्ययष्ट्याह्वधात्रीमरिचतुत्थकैः ।
जलपिष्टैः कृता वर्तिस्तिमिराणि व्यपोहति ॥ १७
शिलासैन्धवकासीसशङ्खव्योषरसाञ्जनैः ।
सक्षौद्रैः काचशुक्लार्मतिमिरघ्नी रसक्रिया ॥ १८
रास्नाफलत्रयक्वाथे दशमूलस्य वा शृतम् ।
कल्केन जीवनीयानां घृतं तिमिरनाशनम् ॥ १९
सर्पिस्त्रिफलयोः सेवा रक्तस्रावो विरेचनम् ।
शालयो जाङ्गला मुद्गा यवा दृष्टेर्हिताः सदा ॥ २०

॥ इति नेत्ररोगचिकित्सा ।

## ॥ अथ कर्णरोगचिकित्सा ॥

कर्णयोः शूल[1]बाधिर्यनादस्रावाः समीरणात् ।
पित्तोष्णेन कफ शुष्कः स भवेत्कर्णगूथकः ॥ २१
सुरुङ्गीकदलीशिग्रमूलकार्द्रकजः पृथक् ।
रसः ससैन्धवः कोष्णः पूरणात्कर्णशूलनुत् ॥ २२
कुष्ठशुण्ठीवचादारुशताह्वाहिङ्गुसैन्धवैः ।
बस्तमूत्रे कृतं तैलं सर्वकर्णामयापहम् ॥ २३
शृतं ससिन्धुबस्ताम्बु तैलं वा दशमूलजम् ।
कणापुरजधूमो वा कर्णानिलगदाञ्जयेत् ॥ २४
[2]न्यग्रोधमधुयष्ट्याम्रजम्बूपल्लवसाधितम् ।
कर्णपूयहरं तैलं जातिपत्ररसेन वा ॥ २५
मार्गक्षारशृतं तैलं कर्णबाधिर्यनादहृत् ।
स्नेहास्विन्न हरेत्कर्णगूथं दार्वीशलाकया ॥ २६
अश्वगन्धभक्ष्णोमामुसलीकुष्ठचूर्णयुक् ।
माहिषं नवनीत स्यात्कर्णपाल्यादिवृद्धिकृत् ॥ २७

॥ इति कर्णरोगचिकित्सा ॥

## ॥ अथ नासारोगचिकित्सा ॥

प्रतिश्यायः क्रमाद्दोषैः स्वच्छपीतघनस्रुतिः ।
मिश्रैर्मिश्रा
शिरोऽभ्यङ्गस्वेदनस्यादिकं भजेत् ॥ २८
प्रतिश्याये पिबेद्धूम सर्वगन्धसमुद्भवम् ।
चातुर्जातकचूर्णं वा घ्रा वा कृष्णजीरकम् ॥ २९
शठीतामलकीव्योषगुडैः पक्व घृतं पिबेत् ।
उरोघातप्रतिश्यायपार्श्वहृत्कुक्षिशूलनुत् ॥ ३०
व्याघ्रीदन्ती वच[3]शिग्रुसुरसाव्योषसैन्धवैः ।
पाचित नावनात्तैलं पूतिनासागदापहम् ॥ ३१

1. बिन्दुर्यो 2. वरण. श्रितपित्ताप्र 3. शीघ्र

शुण्ठीकुष्ठकणाबिल्वद्राक्षाकल्ककषाययुक् ।
साधितं तैलमाज्यं वा नस्यं क्षवथुरुक्प्रणुत् ॥ ३२
घ्राणेऽर्शःशान्तये क्षेप्यं सक्षारा नागजा[1]लता ।
कुडुहुञ्च्यग्निलेपो वा ; नेत्रजे नागघर्षणम् ॥ ३

॥ इति नासारोगचिकित्सा ॥

## ॥ अथ मुखरोगचिकित्सा ॥

वातेन स्फुरिता सुप्ता जिह्वा शाकदलोपमा ।
सदाहैः कण्टकैः पित्ताद्दुरूक्षैश्च चिता कफात् ॥ ३४
निर्लेख्य कण्टकान् सम्यग्विगते दुष्टशोणिते ।
यथादोषं गणा योज्या लेपादिषु तथाऽस्रजे ॥ ३५
दन्तानां तोदहर्षौ च जायेते वाततस्तयोः ।
उष्णतैलाज्यवातघ्नमन्त्रास्नुक्स्रुतिरेचने ॥ ३६
घृततैलमधुक्षीरमूत्रैश्च कबलग्रहाः ।
जातिपत्रामृताद्राक्षायासदार्वीफलत्रिकैः ॥ ३७
क्वाथः क्षौद्रयुतः शीतो गण्डूषैर्मुखपाकजित् ।
कपोलान्तः खरे धूम्रे साङ्कुरे कफजेऽर्बुदे ॥ ३८
स्वर्जिक्षौद्रार्द्रतैलाज्यनिम्बच्छिन्नाऽम्बुधावनम् ।
जिह्वातले तदग्राभा कफास्राद्उपजिह्विका ॥ ३९
सलालाशोफकण्डूषा [2]ततोऽधस्थाऽधिजिह्विका ।
छेदः क्षाराभयावह्निव्योषैर्वा स्यात्प्रघर्षणम् ॥ ४०
उपजिह्वाऽऽदिशान्त्यर्थैर्भिस्तैलं च पाचयेत् ।
तालुमूले कफासृग्भ्यां जायते गलशुण्डिका ॥ ४१
छित्त्वा तां व्योषसिन्धूत्थवचाक्षौद्रैः प्रलेपयेत् ।
गले स्यात्कण्ठशालूकः कोलास्थिप्रतिमः कफात् ॥ ४२
भेद्याऽस्याङ्गुलिशस्त्रेण पूर्ववत्प्रतिसारयेत् ।
वाताद्यैः केवलैर्युक्तै रक्तेनाप्यन्तकारिका ॥ ४३

---

1. वली 2. ततोदस्तादि

स्वलिङ्गा रोहिणी कण्ठे प्रवृद्धा हन्ति जीवितम् ।
सर्वासां शोणितस्रावो यथार्हं कवलग्रहाः ॥ ४४
वातिकां लवणैर्मुख्यैः सक्षौद्रैः प्रतिसारयेत् ।
सारयेत्पित्तरक्तोत्थे सितापत्तङ्गमाक्षिकैः ॥ ४५
वेश्मधूममधुव्योषैः बलासप्रभवामपि ।
रास्नाश्रीववेल्लव्योषमधुमुस्तयवाग्रजैः ॥ ४६
सक्षौद्रैर्विधृतैर्वक्त्रे [1]हन्यात् सर्वगलामयान् ।
आर्कत्वक्काञ्जनी कुष्ठताक्ष्यर्शैलगुडैः कृताः ॥
गुटिका मुखरोगेषु गलरोगेषु धारयेत् ॥ ४७

॥ इति मुखरोगचिकित्सा ॥

## ॥ अथ शिरोरोगचिकित्सा ॥

वाताच्छिरः सशूलं स्यात्पित्ताद्दाहः कफाद्गुरु ।
त्रिदोषात्सर्वलिङ्गं च कृमेः कण्ड्वर्तियुक् शिरः ॥ ४८
वातपित्तोद्भवौ ज्ञेयौ सूर्यावर्तार्धभेदकौ ।
तीव्ररुक् शङ्खकस्त्वाद्यो वातरक्तकफान्वयः ॥ ४९

### ॥ वातिकशिरोरोगे ॥

स्वेदो वातशिरोरोगे गोधूमसुरसादिभिः ।
तैलैर्बलादिभिर्नस्यं कार्या वातहरी क्रिया ॥ ५०
यष्टीमधुबलारास्नादशमूलाम्बुसाधितम् ।
मधुकैश्च शृतं सर्पि[2]र्नूर्ध्वजत्रुगदाञ्जयेत् ॥ ५१

### ॥ पैत्तिकशिरोरोगे ॥

बलाव्याघ्रनखोशीरमधुकोत्पलचन्दनैः ।
क्षीरपिष्टैः प्रलेपः स्यात्पैत्ते क्षीरादिसेवनम् ॥ ५२
त्वक्पत्रशर्करां पिष्ट्वा नावनं तण्डुलाम्बुना ।
घृतं वा शर्कराद्राक्षायष्टिजीरप्रसाधितम् ॥ ५३

---
1. सर्वपालाङ्गलामया    2. मूर्धजन्तगदा

॥ श्लैष्मिकशिरोरोगे ॥

स्विन्नं मधूकसारेण कफार्ते रेचयेच्छिरः ।
दारुरोषणगोत्थावसिन्धूत्थसरकैर्हरेत् ॥ (?) ५४
शताह्वैरण्डमूलोमाचकव्याघ्री फलैः श्रृतम् ।
तैलं नस्य न्मरुच्छ्लेष्मतिमिरोर्ध्वगदापहम् ॥ ५५

॥ षड्बिन्दुतैलम् ॥

भृङ्गं विडङ्गं मधुकं च कुष्ठं
सनागरं गव्यघृतं च पक्वम् ।
षड्बिन्दु नासापुटसंप्रयुक्तं
शिरोगतं रोगशतं निहन्ति ॥ ५६

॥ अपामार्गतैलम् ॥

अपामार्गफलव्योषनिशाक्षवकरोमशैः ।
सविडङ्गैः श्रृतं मूत्रे तैलं नस्यात्कृमिं हरेत् ॥ ५७

॥ सूर्यावर्तार्धभेदयोः ॥

शारिवोत्पलयष्ट्याह्वकुष्ठैर्लेपोऽम्लसंयुतैः ।
घृतं पुरादिसेवा च सूर्यावर्त्तार्धभेदयोः ॥ ५८
कुङ्कुमाज्यसितानस्यं सूर्यवर्त्तार्धभेदहृत् ।
भ्रूनेत्रशङ्ककर्णार्तिघ्राणजानसनुत्फले ॥ (?) ५९

॥ षड्बिन्दुघृतम् ॥

शुण्ठीविडङ्गयष्ट्याह्वैर्भृङ्गतोये श्रृतं घृतम् ।
नस्यं षड्बिन्दुदानेन सर्वमूर्धगदापहम् ॥ ६०

॥ अन्यत् षड्बिन्दुतैलम् ॥

जीवन्तिरुक्त्वङ्निशासिन्धुयष्टि-
रास्नानतैरण्डविडङ्गविश्वैः ।
सक्षीरभृङ्गद्रवपक्वतैलं
षड्बिन्दुनस्येन शिरोगदघ्नम् ॥ ६१

॥ पलितचिकित्सा ॥

निम्बशेलुतिलाक्षाणां तैलं केशसितत्वहृत् ।
नस्याच्छिरीषशैलेयनीलीभृङ्गैश्च लेपनम् ॥ ६२

॥ इन्द्रलुप्तचिकित्सा ॥

इन्द्रलुप्ते सुघृष्टे स्यान्मधुक्षुद्राफलद्रवम् ।
टङ्कणं सार्कदुग्धं वा गुञ्जा वाऽरुष्करं तथा ॥ ६३
वटावरोहानिर्गुण्डीभृङ्गाम्भःफणिकारसैः ।
मांसीगुञ्जाऽक्षयुक्चक्रं तैलं केशादिवृद्धिदम् ॥ ६४
धात्रीरसाञ्जनाम्रास्थिदग्धेभरदचोचकम् ।
भृङ्गराजपयःपिष्टं लेपादाशु सुकेशकृत् ॥ ६५

॥ दारुणचिकित्सा ॥

स्वर्णपुष्पीरसो वाऽपि नियुक्तो राजिकाऽऽप्लुतः ।
दारुणे स्याज्जपातैलं द्राक्षाफलरसाप्लुतम् ॥ ६६

॥ इति शालाक्यतन्त्रे नाम नेत्रकर्णनासामुखशिरोरोगाध्यायः पञ्चविंशः ॥

अथ सर्वव्रणप्रतीकारो नाम

# ॥ षड्विंशोऽध्यायः ॥

## ॥ अथ व्रणचिकित्सा ॥

[1]व्रणो दोषास्त्रलिङ्गः स्यादेकद्वित्र्यस्त्रजोऽष्टधा ।
त्यजेन्मर्मणि संभूतं व्रणं सोपद्रवं चिरम् ॥ १
दाहरुक्कोदरागैस्तु विदग्धं शोफमादिशेत् ।
मन्दैरेतैः सुपक्वं तु वलिवत्पिण्डितं व्रणम् ॥ २
निरुत्सङ्गी तनुः स्निग्धो जिह्वाऽऽभो वा गतव्यथः ।
निरास्त्रावी न चोत्सन्नो व्रणः शुद्धः प्रकीर्तितः ॥ ३
समं वृत्तं विदग्धं स्यादविदग्धस्य पाचनम् ।
पक्वस्य पाटनं शुद्धिः संरोहः स्याद् व्रणस्य च ॥ ४
निःपुत्रोत्तुण्डहृद्दात्रीहलतिद्वेऽर्कपिप्पली । (?)
सरैः सिन्धुपुरैः शान्मैर्ग्रन्थौ लेपो अनुक्तिवत् । (?) ५
पाचनं शिग्रुसिद्धार्थशरमूलकबीजकैः ।
किण्वरुक्पटुभिर्वा स्यात्सौवीरतिलसक्तुभिः ॥ ६
भल्लातास्थ्यर्ककासीसदन्त्यग्नि[2]स्नुकपयोगुडैः ।
लेपोऽजच्छगणं भिन्द्यात्क्षारेणार्शोहरेण वा ॥ ७
तिलसैन्धवयष्ट्याह्वानिम्बपत्त्रनिशायुगैः ।
त्रिवृद्घृतयुतैर्लेपः [3]प्रपिष्टैर्व्रणशोधनम् ॥ ८
वातिके दशमूलाख्यो न्यग्रोधादिश्च पैत्तिके ।
आरग्वधादिको योज्याः कफजे सर्वकर्मसु ॥ ९
अर्जुनोदुम्बरप्लक्षलोध्रजम्बूत्वचः समाः ।
यष्टीकम्पिल्ललाक्षाश्च चूर्णिता व्रणरोपणाः ॥ १०

---

1. शालाज्याम्रपिदाषैश्च 2. त्वक्षयो 3. सवर्ति

अथ सर्वव्रणप्रतीकारो नाम

# ॥ षड्विंशोऽध्यायः ॥

## ॥ अथ व्रणचिकित्सा ॥

[1]व्रणो दोषास्त्रलिङ्गः स्यादेकद्वित्र्यस्त्रजोऽष्टधा ।
त्यजेन्मर्मणि संभूतं व्रणं सोपद्रवं चिरम् ॥ १

दाहस्त्कोदरागैस्तु विदग्धं शो कमादिशेत् ।
मन्दैरेतैः सुपक्वं तु वलिवत्पिण्डितं व्रणम् ॥ २

निरुत्सङ्गी तनुः स्निग्धो जिह्वाऽऽभो वा गतव्यथः ।
निरास्त्रावी न चोत्सन्नो व्रणः शुद्धः प्रकीर्तितः ॥ ३

समं वृत्तं विदग्धं स्यादविदग्धस्य पाचनम् ।
पक्वस्य पाटनं शुद्धिः संरोहः स्याद् व्रणस्य च ॥ ४

निःपुत्रोत्तुण्डहृद्दात्रीहलतिद्वेऽर्कपिप्पली । (?)
सरैः सिन्धुपुरैः शाल्मैर्मन्थौ लेपो अनुक्तिवत् । (?) ५

पाचनं शिग्रुसिद्धार्थशरमूलकबीजकैः ।
किण्वरुक्पटुभिर्वा स्यात्सौवीरतिलसक्तुभिः ॥ ६

भल्लातास्थ्यर्ककासीसदन्त्यग्नि[2]स्नुक्पयोगुडैः ।
लेपोऽजच्छगणं भिन्द्यात्क्षारेणार्शोहरेण वा ॥ ७

तिलसैन्धवयष्ट्याह्वानिम्बपत्रानिशायुगैः ।
त्रिवृद्घृतयुतैर्लेपः [3]प्रपिष्टैर्व्रणशोधनम् ॥ ८

वातिके दशमूलाख्यो न्यग्रोधादिश्च पैत्तिके ।
आरग्वधादिको योज्याः कफजे सर्वकर्मसु ॥ ९

अर्जुनोदुम्बरप्लक्षलोध्रजम्बूत्वचः समाः ।
यष्टीकाम्पिल्ललाक्षाश्च चूर्णिता व्रणरोपणाः ॥ १०

---

1. शालाज्याम्रविदाषैश्च 2. त्वक्षयो 3. सवर्ति

बहुच्छिद्रोष्ट्रगळकस्राविशम्बूकशल्यकाः ।
स्वदोषलिङ्गास्ते ज्ञेयाः कृमिणावन्त्यजौ त्यजे ॥ २१
अपक्वनमये लेपस्वेदासृक्स्राविरेचनम् ।
पाटनाग्न्यादिकं कृत्वा पक्वे च व्रणवत्क्रिया ॥ २२
वटपत्रेष्टकाच्छिन्नावर्षाभूनागरैस्तथा ।
क्षीरयष्टितिलैरण्डैर्लेपोऽस्र पिडकार्तिहृत् ॥ २३
बिडालास्थिनिशाधात्रीदन्तिभिः शोफलेपनम्
भगन्दरे वरकथयुतः पीतश्च गुग्गुलुः ॥ २४

॥ गुग्गुल्वादिवटी ॥

गुग्गुलुत्रिफलाकृष्णाः पञ्चत्र्येकलवा मधु ।
गुटिका शोफगुल्मार्शोभगन्दरवतां हिता ॥ २५

॥ योगराजगुग्गुलुः ॥

पञ्चकोलविडङ्गाग्निकौन्तीन्द्रयवसर्षपैः ।
सपाठेभकणाहिङ्गुर्विषाभर्गीद्विजीरकैः ॥ २६
मूर्वातिक्ताऽजमोदाऽऽढ्यैः समैर्द्विघ्नवरायुत
तत्समो गुग्गुलुर्योगराजः क्षौद्रेण सेवितः । २७
भगन्दरग्रहण्यर्शःकुष्ठवातास्रपाण्डुनुत् ।
विद्रधुरुयोनिरुग्भ्मेहक्षयघ्नश्च रसायनम् ॥ २८

॥ मूत्रवर्तिः ॥

आरग्वधनिशालाक्षाचूर्णाज्ये क्षौद्रसंयुता ।
मूत्रवर्तिर्व्रणे योज्या शोधनी गतिनाशनी ॥ २९

॥ लेपयोगः ॥

त्रिवृत्तेजोवतीदन्तीमञ्जिष्ठारजनीद्वयम् ।
सुरसाञ्जननिम्बं स्याल्लेपो नाडीव्रणापहः ॥ ३०

॥ करवीरतैलम् ॥

करवीरनिशादन्तिलाङ्गलीलवणाग्निभिः ।
मातुलुङ्गार्कवत्साख्यैः पचेत्तैलं भगन्दरे ॥ ३१

॥ वर्ज्यानि ॥

पृष्ठयानाङ्गयुद्धस्त्रीव्यायामगुरुसेवनम् ।
रूढव्रणोऽपि यत्नेन त्यजेत्संवत्सरं नरः ॥ ३२

॥ इति भगन्दरचिकित्सा ॥

॥ अथोपदंशचिकित्सा ॥

नखदन्तक्षतापानात् कुयोनिगमनादिभिः ।
उपदंशोऽन्त्यजोऽस्माद्दो दोषैः सर्वैः स्वलिङ्गवान् ॥ ३३
ध्वजे र [illegible] बहु स्रा[illegible]व्यं लिङ्ग लज्ज लुलप[illegible]म् ।

॥ इत्युपदंशचिकित्सा ॥

॥ अथ ग्रन्थिचिकित्सा ॥

शिरोऽर्तिज्वरकृद् ग्रन्थिः स्थूलः स्याल्लक्षणैर्बली ।
क्षीरमं दुम्बरं तत्र क्षिप्राङ्गुष्ठास्रमोक्षणम् ॥ ३४
स्वेदोऽस्मिन् कर्णमूलोत्थे शिग्रुत्वार्कपण्डकाञ्जि[illegible]ः ।
कक्षास्थिते च लेपोऽत्र कुमार्यश्वत्थासिन्धुभि ॥ ३५

॥ इति ग्रन्थिचिकित्सा ॥

॥ अथ गलगण्डचिकित्सा ॥

त्रिविधो गलगण्डः स्याद्वातमेदःकफान्वयः ।
कृष्णारुणास्यवैरस्या[1]पाकिशोफकरोऽनिलात् ॥ ३६
मेदोजः स्यान्मृदुः स्निग्धः कफजः स्थौल्यवान् स्थिरः ।
क्षीणस्य वत्सरातीतो गलगण्डो न सिध्यति ॥ ३७

1. काल

स्वेदोपनाहलेपैश्च रक्तमोक्षविशोधनैः ।
स्वगुणैस्तैलपानैश्च गलगण्डाञ्जयेद्भिषक् ॥
शणमूलकाशिग्रूणां बीजैः सयवसर्षपैः ।
लेपोऽम्लतक्रपिष्टैश्च ग्रन्थिगण्डविलोपनः ॥ ३
विडङ्गक्षारसिन्धूत्थरास्नाग्निव्योषदारुभिः ।
तैलं तुम्बीरसे सिद्धं नस्यं स्याद्गलगण्डहृत् ॥ ४

॥ इति गलगण्डचिकित्सा ॥

## ॥ अथ गण्डमालाऽपचीचिकित्सा

ग्रन्थयः श्लेष्ममेदोभ्यां धात्र्यस्थिप्रतिमा गले ।
गण्डमाला
अपची सैव बहुकालानुबन्धिनी ॥ ४
सक्षौद्रो वरणक्वाथः पीतोऽपच्यादिहृत्तकृत् ।
लेपो वा शिग्रुदारूष्णकाञ्जिकैर्लवणान्वितैः ॥ ४
निर्गुण्डीस्वरसेनापि लाङ्गलीकल्कपाचितम् ।
तैलं नस्येन हन्त्याशु गण्डमालां सुदुस्तराम् ॥ ४
पक्वं क्षारेण संभेद्य व्रणवत्समुपाचरेत् ।
गण्डे मूषकतैलेन लेपो वा विषतिन्दुना ॥ ४

॥ इति गण्डमालाऽपचीचिकित्सा ॥

## ॥ अथार्बुदादिचिकित्सा ॥

पृथग्दोषैरसृग्मांसमेदोभिर्जायतेऽर्बुदम् ।
तत्स्वदोषविकारैः स्यादसाध्ये रक्तमांसजे ॥ ४
गलगण्ड[2]विधानेन बद्ध्वा वस्त्रादिपट्टकैः ।
शस्त्रक्षाराग्निकर्माणि विधिवत्संप्रयोजयेत् ॥ ४
अत्रोपनाहलेपश्च पद्मालवणकाञ्जिकैः ।
लेपो निशाशिलालोध्रधूमक्षौद्रैर्हिताऽर्बुदे ॥ ४

---

1. सूक्ष्म 2. क्षयानस्य

जानुरुं दिनासाय (?) ग्रणवद्रक्तमोक्षणम् ।
सामुद्रकाञ्जिकोत्पिष्टयवाचञ्चाविलेपनम् ॥ ४८
सजन्तुव्रणनाशाय बलाऽऽऽ्यरिपुचन्दनम् ।
लेपो भल्लातकाकाङ्घ्रिलिल्लहिङ्गुनिशापुरैः ॥ ४९
पानलेपनतैलेषु युक्ता च गरुडी हिता ।
हयारितैललेपो वा स्नायुकेऽस्रं च मोचयेत् ॥ ५०
मेषीक्षारं दृषच्चूर्णकटुतुम्ब्य स्थितं क्षिपेत् ।
अस्थिभङ्गे त्वचो भेदे पङ्गुशोषे द्रवं न्यसेत् ॥ ५१

॥ इत्यर्बुदादिचिकित्सा ॥

## ॥ अथ लूताव्रणचिकित्सा ॥

लूतानाखेरतव्यूर्ध (?) दोषैस्तज्ज्वरालिङ्गिनी ।
मृदूच्चातिव्यथग्रन्थिर्दाहशोफविसर्पिणी ॥ ५२
कृष्णताल्वग्रदन्तोष्ठः पीतास्योऽतिज्वरक्लमी ।
श्लथाङ्घ्रिदोर्गलः श्वासी त्रिदोषाचात्र नश्यति ॥ ५३
भ्रूमध्यगलदोर्गण्डस्तनहृत्पृष्ठमूर्धगाः ।
त्वक्षन्या स्वेदयेद्भूयो वातघ्नोत्तुण्डकाञ्जिकैः (?) ॥ ५४
दक्षपारावतशकृद्वंशाहिङ्गुशिलाऽऽलकैः ।
मदनाद्यैः समैर्लेपः सर्वलूताविषापहः ॥ ५५
कपित्थपाटलाशेलु शिरीषद्विपुनर्नवैः ।
[2]गिरिकर्णोऽगदः सर्वलूताविषनिवारणः ॥ ५६

॥ इति लूताव्रणचिकित्सा ॥

## ॥ जालगर्दभचिकित्सा ॥

जालगर्दभसंज्ञस्तु शोफः पित्तज्वरार्तिमान् ।
तत्रासृग्बहु विस्राव्यं लेपः [3]पित्तविसर्पवत् ॥ ५७

---

1. सिरेषु 2. द्वसहवा 3. चातुर्थचाहितः ।

## ॥ विस्फोटचिकित्सा ॥

कालः स्फोटः स सन्धिस्थो विषघ्नयत्र क्रिया हिमा ।
गुञ्जादलसितायष्टीः पिष्ट्वा दुग्धेन पाययेत् ॥ ५८
शान्त्यै कान्ताचर्पाटकारिकाञ्जिफलेपनम् ।
विस्फोटा वह्निजाभाः स्युः दोषैस्ते स्वस्वलिङ्गिनः ॥ ५९
विषार्तिपित्तज्वरदास्याज्या रक्तप्रदोषजाः ।
शिरीषैलाम्बुरुग्मांसीनिशायष्टीनतारुणैः ॥ ६०
साज्यैर्लेपो दशाङ्गोऽयं कण्डूविस्फोटदाहहृत् ।
वासानिम्बामृताधात्रीपटोलद्विनिशाऽम्बुदैः ॥ ६१
क्वाथो विस्फोटवीसर्पदाहहृच्च घृतं तथा ।

## ॥ मसूरिकाचिकित्सा ॥

मसूर्याख्यास्तदाकारस्फोटा दुष्टास्रदोषजाः ॥ ६२
तदग्रे ज्वरनेत्राङ्गरागकण्डूवमिपूतिदाः ।
पिबेत्तासामनुत्पत्त्यै गोजिह्वाऽङ्घ्रिमधूदकम् ॥ ६३
हिङ्गुरालरसोनैश्च[1] दुष्टा द्राग्धूपयेन्मृदु ।
निम्बधात्री वृषोशीरचन्दनद्वयपर्पटैः ॥ ६४
तिक्तावासापटोलाद्यैः क्वाथः सर्वमसूरहृत् ।
हरेत्क्लिन्नां विसर्पन्तीं विशा गोरवचूर्णनैः ॥ ६५
समेतैरगदैश्चापि पक्वाया व्रणवत्क्रिया ।

## ॥ तारुण्यपिडकाचिकित्सा ॥

शङ्खाम्लकठिकालेपस्तारुण्यपिडकापहः ॥ ६६
तथा सिद्धार्थसिन्धूत्थालोध्रधान्यैः कृतो भवेत् ।

## ॥ वल्मीकचिकित्सा ॥

ग्रीवांसहस्तकक्षाङ्घ्रिसन्धौ ग्रन्थिस्त्रिदोषजः ॥ ६७
स्रावतोदमुखैर्वापि वल्मीकं चिरजं त्यजेत् ।

1. रञ्जनमाषाद्यैः

वल्मीकेऽस्रस्रुतिर्लेपः पट्वारग्वधकाञ्जिकैः ॥ ६८
पक्वन्तूत्कृत्य शस्त्रेण क्षाराग्निभ्यां प्रसाधयेत् ।
शिलात्रुटीसभल्लातचन्दनागरुजातिभिः ॥ ६९
सतर्कैः पाचितं निम्बतैलं वल्मीकहृत्परम् ।

। हिताहितानि ॥

शालिमुद्गयवान्नाद्या जाङ्गलं च हितं व्रणे ॥ ७०
दधिक्षीरान्नगुर्वन्नमम्लं निद्रां श्रमं त्यजेत् ।

॥ इति सर्वव्रणप्रतीकाराध्यायः षड्विंशः ॥

अथ विषचिकित्सा नाम

# ॥ सप्तविंशाऽध्यायः ॥

वातपित्तकफात्मानो भोगिमण्डलिराजिलाः ।
व्यन्तरा द्वन्द्वजास्तेषां स्वलिङ्गं विषदंशयोः ॥ १

॥ असाध्यलक्षणम् ॥

त्याज्यः शीतादरोमाङ्को हृद्रोगी विवृताननः ।
प्राण्यवाक्श्लथकेशाङ्गो नीलशोफास्रदंशवान् ॥ २
वदनाद् भूषणाच्चेदबाहुस्रावद्रुतं हिता । (?)

॥ हृदयावरणम् ॥

दर्शनादस्रपित्तस्य हृदयावरणे घृतम् ॥ ३

॥ भोगिविषे ॥

निर्गुण्डी ससिता श्वेता पीता फणिविषापहा ।
भावितं स्वरसेनैव मूलं वा सिन्धुवारजम् ॥ ४

॥ मण्डलिविषे ॥

वटशुङ्गा समञ्जिष्ठा जविकर्षभकौ सिता ।
काश्मर्यं मधुकं चैतत्पानं मण्डलिदष्टके ॥ ५

॥ राजिलविषे ॥

कौन्तीकुष्ठनखव्योषं कटुकाऽतिविषा मधु ।
गृहधूमश्च पीतानि घ्नन्ति राजिलजं विषम् ॥ ६

॥ अञ्जनयोगः ॥

मांसीचन्दनसिन्धूत्थकृष्णायष्टयूषणोत्पलैः ।
अञ्जनं स्यात्सगोपित्तैर्विषसुप्तप्रबोधनम् ॥ ७

॥ नस्ययोगः ॥

वन्ध्याकर्कोटकीमूलं छागमूत्रेण भावितम् ।
नस्यं काञ्जिकसंपिष्टं विषोपहतचेतसाम् ॥ ८

॥ अगदयोगौ ॥

शिरीषनक्तनक्ताह्वाबीजकोशातकीफलैः ।
हन्ति गोमूत्रसंपिष्टं विषाण्या चागदोत्तमम् ॥ ९
मञ्जिष्ठैलानिशालाक्षामांसीयष्टिहरेणुकाः ।
क्षौद्रं चेति विषघ्नोऽयमगदः सर्वकर्मसु ॥ १०

॥ स्थावरविषे ॥

अर्कमूलत्वचश्चूर्णं पीतं शीतेन वारिणा ।
सर्वधुत्तूरघोणासकरवीरविषापहः ॥ ११
ईश्वरी बदरी भार्ङ्गी चन्द्रा श्वेता घनस्वनः ।
निर्गुण्डी चेति वर्गोऽयं पृथग्वा विषजित्परम् ॥ १२
मधुगोमयवारिभ्यां पिबेन्मूलविषामयी ।
क्षौद्रसिन्धुनिशाऽऽज्यन्तु पीत्वा सर्वान् गदाञ्जयेत् ॥ १३

॥ अलिविषचिकित्सा ॥

शिरीषब्रह्मबीजार्कोशीरैर्लेपोऽलिनां विषे ।
तालनिम्बार्कपत्राज्यसैन्धवैः सेकधूपनम् ॥ १४
गोमूत्रनिम्बबीजाब्ददार्वीत्र्योषविडङ्गकैः ।
अञ्जनं वोष्णसिन्ध्वाज्यपानं [1]सोपद्रवे विषे ॥ १५
शिलाकरञ्जशैरीषबीजकुष्ठैः सकुङ्कुमैः ।
वर्तिः संस्पर्शयुक्ताऽलिविषसंक्रान्तिहारिणी ॥ १६

॥ आखुविषे ॥

तण्डुलाम्बुकुरण्टाङ्घ्रिक्षौद्राण्याखुविषे पिबेत् ।

---

1. शोफद्रवालजे

## ॥ कीटविषे ॥

सव्योषैर्गुडतैलार्कक्षीरभृष्टतिलैः समैः ॥ १७
त्रिवृन्मेघरवाङ्घ्रयाज्यं सर्वकीटविषे पिबेत् ।

## ॥ स्थावरजङ्गमविषभेदेषु ॥

पुरधूमाश्वगन्धाऽब्दनादं स्थावरजङ्गमे ॥ १८
शिरीषो हंसपादी च गैरिकं रजनीद्वयम् ।
नखदन्तविषं हन्ति निःशेषं लेपयोगतः ॥ १९
गौधेयस्य विषं याति कन्थारीमूलनस्यतः ।
मक्षिकाया विषे छत्रघृतसैन्धवलेपनम् ॥ २०
वृकव्याघ्रश्रृगालर्क्षतरक्षुद्वीपिवाजिनाम् ।
विषेषु स्वर्णदुग्धाभ्यां पेया श्वेतपुनर्नवा ॥ २१
पूगभ्रमोऽम्बुपानेन जिह्वाकर्षणवान् व्रजेत् ।

## ॥ चूर्णदाहे ॥

सितां जातीफलं तैलं चूर्णदग्धे मुखे क्षिपेत् ॥ २२

## ॥ अग्निदाहे ॥

तैलभृष्टयवैः स्विन्नैर्लेपोऽग्न्यर्तिविदाहहृत् ।

## ॥ भल्लातविषे ॥

नवनीततिलैर्लेपो भल्लाते तिन्दुकेन वा ॥ २३
शीतक्रिया विषार्ते स्यात् ।.........(?)

## ॥ मदात्ययचिकित्सा ॥

.........(?) मिथ्यापाने मदात्ययः ।
दोषलिङ्गो भवेत्तत्र स्वदोषशमनी क्रिया ॥ २४
मद्यं सौवर्चलव्योषयुक्तं किञ्चिज्जलान्वितम् ।
जीर्णमद्याय दातव्यं वातपानात्ययापहम् ॥ २५

पित्ते क्षीरं सितायुक्तं मद्यमर्घोदकं पिबेत् ।
मधुरौषधनिःक्वाथयुक्तं वा शर्कराऽन्वितम् ॥ २६
दीपनीयौषधोपेतं हितं मद्यं कफोत्तरे ।
त्रिफलारससंयुक्तं व्योषचूर्णं च लङ्घनम ॥ २७
मिश्रे मिश्रं प्रयोक्तव्यं तृष्णाऽऽद्याः स्वौषधैर्जयेत् ।
अभ्यङ्गोद्वर्तनस्नानघृतक्षीरादि शीलयेत् ॥ २८
क्षीरं पुनर्नवाक्वाथे यष्टिकल्कप्रसाधितम् ।
घृतं यष्टिकृतं पेयं मद्यपानहृतौजसा ॥ २९

॥ इति विषाध्यायः सप्तविंशः ॥

अथ ग्रहोन्मादापस्मारचिकित्सितं नाम

## ॥ अष्टाविंशोऽध्यायः ॥

### ॥ अथ ग्रहचिकित्सा ॥

ग्रहाश्छिद्रेषु गृह्णन्ति बलिस्थितिमृतीच्छया ।
ज्ञेया देवासुराद्याश्च ततो बलविचेष्टितैः ॥
कुमारवृन्दानुगतं नग्नमुद्धतमूर्धजम् ।
अस्वस्थमानतं दीर्घकालशङ्काग्रहं त्यजेत् ॥ २
शून्यवेश्मस्थितानेतान् सान्वयान् बलिभिर्जयेत् ।
नश्यन्ति च तपोमन्त्रैर्नस्यपानाञ्जनादिभिः ॥ ३

### ॥ घृतयोगौ ॥

सिद्धार्थत्रिफलाशिरीषकटुभिः श्वेताकरञ्जामरै-
र्मञ्जिष्ठारजनीद्वयत्रिकटुकश्यामावचासिन्धुभिः ।
सिद्धौ बस्तजले च सर्पिरगदौ सर्वग्रहोच्चाटनौ
कृत्योन्मादविषज्वरप्रशमनौ पानादिभिर्योजितौ ॥ ४

### ॥ कार्पासास्थ्यादिधूपः ॥

कार्पासास्थिमयूरपिच्छबृहतीनिर्माल्यपिण्डीतकै-
र्मांसीत्वग्वृषदंशविट्तुषवचाकेशाहिनिर्मोचकैः ।
नागेन्द्रद्विजशृङ्गहिङ्गुमरिचैस्तुल्यैः सुधूपः कृतः
कृत्योन्मादपिशाचराक्षससुरावेशज्वरघ्नः परः ॥ ५

॥ इति ग्रहचिकित्सा ॥

### ॥ अथोन्मादचिकित्सा ॥

दुष्टमेदोऽन्नपानेच्छाभयशोकादिहेतुभिः ।
मनोविस्मृतिकालुष्यादुन्मादः पञ्चधा भवेत् ॥ ६

स स्यादास्फोटकाक्रन्दहास्यनृत्यैर्मरुद्भवः ।
पैत्तस्तु कोपशीतेच्छातर्जनाभिद्रवादिभिः ॥ ७
प्रमीलाभाषणोष्णेच्छाऽरोचकैः कफतः स्मृतः ।
कृत्वा स्वदोषहृत्कर्म निष्कार्धं गन्धकं पिबेत् ॥ ८
सस्वर्णपञ्चगव्याज्यं यथोक्ताज्यादिकं तथा ।

॥ सारस्वतघृतम् ॥

पाठाहरीतकीशिग्रुवचाव्यूषणसैन्धवैः ॥ ९
पलांशैः सर्पिषः प्रस्थमजाक्षीराढके श्रृतम् ।
एतत्सारस्वतं सर्पिः स्मृतिमेधाविवर्धनम् ॥ १०
जठरामयमूकत्वं सोन्मादं हन्ति पानतः ।

॥ यष्ट्यादिनस्यम् ॥

यष्टिहिङ्गुवचाचक्राशिरीषलशुनामयैः ॥ ११
साजमूत्रैरपस्मारं सोन्मादं नावनाज्जयेत् ।

॥ इत्युन्मादचिकित्सा ॥

॥ अथापस्मारचिकित्सा ॥

भ्रमावेशनिपातैः स्यात्सास्यफेनैः सकम्पनैः ।
स्वदोषलिङ्ग्यपस्मारस्तत्रोन्मादहरी क्रिया ॥ १२

॥ ब्राह्मीघृतम् ॥

शङ्खपुष्पीवचाकुष्ठैः सिद्धं ब्राह्मीरसे घृतम् ।
पुराणं हन्त्यपस्मारं सोन्मादं मेध्यमुत्तमम् ॥ १३

॥ पथ्यापथ्यानि ॥

जलाग्निद्रुमशैलादीन्विषमानपि वर्जयेत् ।
यत्नतः शीलयेन्मेध्यमपस्मारी रसायनम् ॥ १४

॥ इति महोन्मादापस्माराध्यायोऽष्टाविंशः ॥

अथ रसायनवाजीकरणविधिर्नाम

## ॥ एकोनत्रिंशोऽध्यायः ॥

अवृद्धः शुद्धकायोऽद्याज्जरादिघ्नं रसायनम् ।
मुद्गयूषपयःशालीनद्यात् स्नेहोदितं त्यजेत् ॥ १

॥ विडङ्गादिकल्पः ॥

विडङ्गत्रिफलाकृष्णालोहचूर्णान्यशर्कराः ।
सक्षौद्रं शीलिता घ्नन्ति वार्धकं पलितैः सह ॥ २

॥ पुनर्नवाकल्पः ॥

पुनर्नवा पलार्धं स्यात्पयःपीतं जराऽपहम् ।

॥ वाजिगन्धाकल्पः ॥

तथैव मासयुग्मेन वाजिगन्धाऽतिपुष्टिदा ॥ ३

॥ जयाकल्पः ॥

जयोष्णा ग्राहिणी रुच्या दीपनी कफवातजित् ।
तस्या गुञ्जाष्टकं प्रायः सर्वकालं बलप्रदम् ॥ ४

॥ पिप्पलीवर्धमानकल्पः ॥

दशादिवृद्धिहान्याऽद्यात्सहस्रं पयसा कणाः ।
क्षयकासोदरश्वासगुल्मोन्मादानिलार्दितः ॥ ५
नार्शःप्रवाहिकागण्डमालिसापथ्यदुर्बलाः ।

॥ भल्लातककल्पः ॥

पञ्चभल्लातकक्वाथं शीतं साज्योष्ठतालुकः ॥ ६
पञ्चवृद्ध्या पिबेद्यावत्सप्रतिं ह्रासयेत्तथा ।
जीर्णे साज्यपयोऽन्नाशी जराऽर्शःकुष्ठजन्तुजित् ॥ ७
अपचीज्वरशोफाद्याः स्युस्तत्रेष्टा हिमक्रिया ।

॥ चन्द्रप्रभागुलिका ॥

बिल्वाग्निव्योषभूनिम्बचव्यदारुवराऽम्बुदम् ॥ ८
शटीग्रन्थियवक्षारसिन्धूमादारुमाक्षिकम् ।
द्विनिशेभकणापथ्या विषा धान्यं च कार्षिकम् ॥ ९
शिलाजतुपलान्यष्टौ पुरस्याष्टौ तुगापलम् ।
त्रिसुगन्धत्रिवृद्दन्त्यः पालिका अयसः पले ॥ १०
सितायाः कुडवश्चन्द्रप्रभैषा गुलिकाऽधिका ।
सर्वार्शोव्रणवातार्तिकुष्ठपाण्डूदरक्षयान् ॥ ११
कृच्छ्रमेहाश्मरी[1]पाण्डु कुष्ठाशांसि च नाशयेत् ।

॥ पथ्याकल्पः ॥

सिताविश्वकणाक्षौद्रगुडसिन्धुयुता क्रमात् ॥ १२
पथ्या स्यात्सर्वरोगघ्नी भक्षिता शरदादिषु ।

॥ वारिकल्पः ॥

घ्राणेनास्येन वा प्रातर्वारि नित्यं पिबेद्भवेत् ॥ १३
युवा सर्वगदैर्मुक्तः परमायुर्दृढेन्द्रियः ।

॥ वाजीकरयोगाः ॥

मुसलीवानरीधात्रीगुडूचीसत्त्वगोक्षुराः ॥ १४
शाल्मलीशर्कराक्षौद्रदुग्धाढ्याः शुक्रवृद्धिदाः ।
घृते पक्वाश्च ये माषस्वगुप्तातिलशालिभिः ॥
भक्ष्या वृष्यतरा माषपायसं च सिताऽऽज्ययुक् ॥ १५

॥ इति रसायनवाजीकरणाध्याय एकोनत्रिंशः ॥

1. पूर्वतुषाराज्य

## अथ बालरोगचिकित्सितं नाम

# ॥ त्रिंशोऽध्यायः ॥

### ॥ योनिरोगचिकित्सा ॥

रत्यादिभ्रा गदा योनौ दोषैः सर्वैः [1]स्वलक्षणाः ।
कार्यं स्वदोषहृत्सर्वं साजक्षीरं पिबेत्क्रमात् ॥
चूताङ्क्रित्रिवृदेरण्डं यष्ट्यब्दारुणरुग्जलम् ।
द्विक्षुद्राऽभिवराव्योषयष्ट्याह्वाऽम्लोरुबुत्रिवृत् ॥

### ॥ गर्भिणीलक्षणम् ॥

श्यामोच्चचूचुका ज्ञेया जातगर्भा [2]सदौर्हृदा ।

### ॥ गर्भस्थापनयोगाः ॥

ततो हिता शृता क्षीरे लक्ष्मणा नस्यपानयोः ॥
वटशुङ्गापयो नस्ये स्यात्पाने साज्यकेसरम् ।
[3]अद्यान्द्रोज्यैरतीक्ष्णोष्णैः स्वादुशीतैः स्थितिः शिशोः ॥

### ॥ गर्भशूले ॥

पद्मकोत्पलयष्ट्यम्बुमुद्गपर्णीकशेरुकम् ।
कुलालकरमृत्क्षीरं सिताऽऽढ्यं गर्भशूलनुत् ॥
कशेरुगोक्षुरैरण्डशतावर्युत्पलैः शृतम् ।
अजाक्षीरं सितायुक्तं गर्भशूलहरं परम् ॥

### ॥ गर्भपाते ॥

गर्भपाते पिबेत्पेयां पञ्चकोलकृतां तथा ।
रूक्षां माससमाहानि बिल्वादितृणधान्यजाम् ॥

योनौ सतैलवर्षाभूरोहिणीबृहतीर्न्यसेत् ।
प्रस्रुतौ स्वस्वदोषघ्नं स्नानं वाऽस्रहरं जले ॥ ८
पानेऽम्भोरुहवंशत्वग्बलागोक्षुरबिल्वजम् ।
द्वित्र्यहं लङ्घनं बोळपानं चास्रदरार्तिहृत् ॥ ९
ततोऽद्यात्पायसं साज्यं सप्ताहात् बृंहणं भजेत् ।
वातघ्नं च सदा यत्नाद्यथास्वं तद्रुजं जयेत् ॥ १०

## ॥ सूतिकाचिकित्सा ॥

सूताया हृच्छिरोबस्तिशूले कोष्णोदकं पिबेत् ।
यवक्षारं तथा मद्यं निर्गुण्डीतुळसीगुडैः ॥ ११
पिप्पल्यादिगणैः क्वाथं पिबेद्वा लवणान्वितैः ।
निम्बवातारिबीजाभ्यां लेपनं योनिशूलहृत् ॥ १२
पञ्चमूलस्य निःक्वाथस्तप्तलोहेन संगतः ।
सूतिकारोगनाशाय पिबेद्वा तत्कृतां सुराम् ॥ १३

## ॥ स्तन्यदोषचिकित्सा ॥

अपथ्यं तद्भवेद्दोषैः स्तन्यं स्वरसवर्णकम् ।
अदुष्टं त्वम्बुनिक्षिप्तमेकीभवति पाण्डुरम् ॥ १४
भार्ङ्गीदारुवचापाठाः पिबेत्सातिविषाः शृताः ।
शम्याकादिं घनादिं वा धात्री स्तन्यविशुद्धये ॥ १५
[1]शतावरी विदारी वा सक्षीरा क्षीरवृद्धिकृत् ।
स्तनशोफार्तिहृल्लेपो हरिद्राऽङ्घ्रिविशालया ॥ १६

## ॥ अथ बालरोगचिकित्सा ॥

### ॥ ज्वरे ॥

पिप्पल्यतिविषाशृङ्गीक्षौद्रैर्लेहः शिशोः कृतः ।
सक्षौद्राऽतिविषा चैका ज्वरकासवमिं जयेत् ॥ १७

1. मृगदूर्वा

॥ अतिसारे ॥

गजाह्वाधातकीलोध्रबिल्वोदीच्यैः समाक्षिकः ।
लेहः क्वाथोऽथवा हन्ति कुमारस्यातिसारकम् । १८
घनतिक्ताविषाशृङ्गीचूर्णं क्षौद्रेण संयुतम् ।
शिशोर्ज्वरातिसारघ्नं कासश्वासवमीहरम् ॥ १९
मोचारसः समङ्गा च धातकीपद्मकेसरम् ।
पिष्टैरेतैर्यवागूः स्याद्रक्तातीसारनाशनी ॥ २०
गुदपाके तु बालानां पित्तघ्नीं कारयेत् क्रियाम् ।
रसाञ्जनं हितं पाने गुदाभ्यङ्गस्तु सर्पिषा ॥ २१

॥ मूत्रग्रहे ॥

कणोषणसिताक्षौद्रसूक्ष्मैलासैन्धवैः कृतः ।
मूत्रग्रहे प्रयोक्तव्यः शिशूनां लेह उत्तमः ॥ २२

॥ आनाहादिषु ॥

घृतेन सिन्धुविश्वैलाहिङ्गुभार्ङ्गयवलेहनम् ।
[1]आनाहाटोपशूलानि जयेत् तोयेन वा शिशोः ॥ २३

॥ कासश्वासे ॥

पुष्करातिविषाशृङ्गीमागधीद्वियवासजम् ।
चूर्णं स्यान्मधुना लीढं शिशूनां पञ्चकासजित् ॥ २४
द्राक्षाकृष्णाऽभयावासाचूर्णं सक्षौद्रसर्पिषा ।
लीढं श्वासं निहन्त्याशु कासं च तमकं तथा ॥ २५

॥ तालुपाके ॥

तालुपाके वचाकुष्ठं क्षौद्रे स्तन्येऽभयां पिबेत् ।

॥ तृष्णायाम् ॥

श्यामाऽञ्जनाब्दकोलास्थिक्षौद्रैर्लेहस्तृडस्नाजित् ॥ २६

---

1. अनाहान्तिकः

॥ अक्षिरोगे ॥

कुमिघ्नजशिलादार्वीलाक्षाकाञ्चनगैरिकैः ।
बहिरालेपनं कार्यमक्षिरोगविनाशनम् ॥

॥ मुखपाके ॥

अश्वत्थत्वग्वचाक्षौद्रैर्मुखपाके विलेपनम् ।
दार्वीयष्ट्यभयाजातिपत्रक्षौद्रैस्तथा हरेत् ॥

॥ दन्तोद्भेदे ॥

श्वेतानिर्गुण्डिकामूलं पूर्वं गलविलम्बितम् ।
दन्तोद्गमव्यथां हन्ति तुम्ब्यक्षीर्यश्ववाज्वरः (?) ॥
'सरलेभकणादारुपृथक्पर्णीनिशा मिशिः ।
सव्याघ्रीद्वयमध्वाज्यं बालानां सर्वरोगजित्" ॥ बालाष्टकम् ॥

॥ नाभिपाके ॥

नाभिपाके निशालोध्रप्रियङ्गुमधुकैः शृतम् ।
तैलं लेपाय चूर्णं वा सोच्छ्वासे स्वेदयेन्मृदा ॥

॥ सिध्मादिषु ॥

गृहधूमनिशाकुष्ठराजिकेन्द्रयवैः शिशोः ।
लेपस्तक्रेण हन्त्याशु सिध्मापामाविचर्चिकाः ॥

॥ सामान्योपायाः ॥

त एव दोषास्ते दूष्यास्तस्माद्रोगौषधं तथा ।
मात्रया स्वल्पया लेह्यं योज्यं, दाहादि वर्जयेत् ॥
ब्राह्मीकणाऽजमोदाम्राहरिद्राकुष्ठजीरकैः ।
सविश्वासिन्धुयष्ट्याज्यैर्लेहो मूकत्वजाड्यहृत् ॥
अश्वगन्धाऽङ्घ्रिकल्केन क्षीरे दशगुणे घृतम् ।
पक्वं [1]बालस्य पुष्ट्यै स्याल्लेपो लाक्षादितैलकम् ॥

---

1. बालसयष्ट्य

## ॥ बालग्रहचिकित्सा ॥

ब्राह्मीवचाकणाकुष्ठशारिबासिन्धु[1]सर्षपैः ।
पक्वं सर्पिर्ग्रहघ्नं स्याद्[2]बुद्धिमेधास्मृतिप्रदम् ॥ ३६

जागरूको भयोद्वेगी दुर्गन्धो बहुचेष्टितः ।
नखदन्तविकारी स्यात्कुमारो ग्रहदोषतः ॥ ३७

रसोननिम्बसिद्धार्थवंशत्वग्धूमधूपनम् ।
मुण्डी सहाऽद्रिकर्णी च लेपात् स्नानाच्च भूतहृत् ॥ ३८

[3]महादेहप्रमाणेन [4]पुष्पैर्मांसैश्च धूपनैः ।
प्रगृह्य मुष्टिना भक्तं बलिर्देयः समन्त्रकः ॥ ३९

॥ इति विष्णुभट्टसुतपण्डितदामोदरविरचितायामारोग्य-
चिन्तामणिसंहितायां बालरोगाध्यायस्त्रिंशः

1. सर्षपैः
2. दधि
3. पुरुषेणेति शेष
4. पुष्यमासश्च

॥ श्रीपञ्चगुरुभ्यो नमः ॥

# अथातो भेषजकल्पं व्याख्यास्यामः

## ॥ कल्पनाप्रशंसा ॥

देशकालानुगुण्येन संगृहीतं यथाविधि ।
स्थापितं भेषजं तैस्तैः कल्पनैरमृतायते ॥ १

## ॥ देशभेदः ॥

देशो जाङ्गल आनूपः साधारण इति त्रिधा ।

## ॥ जाङ्गललक्षणम् ॥

जाङ्गलो विरळात्यल्पकण्टकद्रुनगान्वितः ॥ २
अल्पप्रस्रवणो दूरविगाढविरसोदकः ।
व्योमविस्तीर्णविषमो विरूक्षसिकतास्थलः ॥ ३
कृशस्थिरक्लेशसहवातभूयिष्ठमानुषः ।
अरोगबहुलो योनिः कटुकस्य रसस्य च ॥ ४

## ॥ आनूपलक्षणम् ॥

आनूपः शिशिरः स्निग्धभूमिर्भूरितृणोपलः ।
प्रभूतशैवलच्छन्नबहुमत्स्यजलाशयः ॥ ५
महाद्रितुङ्गस्तुङ्गद्रुताळहिन्ताळवेल्लितः ।
गलरोगापचिग्रन्थिश्लेष्म[1]जव्याध्युपद्रुतः ॥ ६
सुकुमारमृदुस्थूलश्लेष्मभूयिष्ठमानुषः ।
जाङ्गलाद्विपरीतश्च स योनिर्मधुरस्य च ॥ ७

## ॥ साधारणलक्षणम् ॥

साधारणः सममलः सहितोभयलक्षणः ।
शीतोष्णवर्षपवनैः समं सा धार्यते यतः ॥ ८

---

1. श्लेष्मदाद्यैः

॥ साधारणभेदः ॥

जाङ्गलानूपबाहुल्यात्स तु साधारणो द्विधा ।
कषायतिक्तयोराद्यो योनिरन्यस्तदन्ययोः ॥ ९

॥ ओषधिग्रहणयोग्यभूमिः ॥

तत्र साधारणे देशे धन्वे वा लक्षणान्विता ।
ज्योत्स्नाऽऽ[1]तपानिलजलैर्यथाकालं निषेविता ॥ १०
प्रदक्षिणोदका मृद्वी प्रभूतकुशरोहिषा ।
स्निग्धकृष्णसुवर्णाभसुरभिस्वादुमृत्तिका ॥ ११
शर्करोषरपाषाणश्वभ्रवल्मीकवर्जिता ।
चैत्यश्मशानायतनमहोद्यानाद्यनन्विता ॥ १२
अफालकृष्टा नाक्रान्ता तरुभिर्बलवत्तरैः ।
शुचिः समा च भैषज्यग्रहणे भूमिरिष्यते ॥ १३

॥ ओषधिग्रहणायोग्यभूमिः ॥

देवालये श्मशाने च वर्चःस्थाने पथिष्वपि ।
शून्यागारे च वल्मीके वर्जयेज्जातमौषधम् ॥ १४

॥ ओषधिग्रहणविधानम् ॥

अथ कल्याणचरितः श्राद्धः शुचिरुपोषितः ।
संपूज्य देवगोविप्रान् ब्रह्माणं दक्षमश्विनौ ॥ १५
चतुर्दिक्षु बलिं दत्त्वा गन्धपुष्पाक्षतादिभिः ।
देवताभ्यो नमस्ताभ्यो या वसन्तीह संश्रिताः ॥ १६
गन्तुमर्हन्त्यसंक्रुद्धास्त्यक्त्वेमं वासमव्ययम् ।
भेषजार्थं ग्रहीष्यामि सर्वप्राणभृतामिमम् ॥ १७
वृक्षं न लोभान्न क्रोधाद् ब्राह्मणार्थे विशेषतः ।
मन्त्रेणानेन विधिवद्रक्षाबन्धं समाचरेत् ॥ १८
'येन त्वां खनते ब्रह्मा येन त्वां खनते हरिः ।
तेनाहं त्वां [2]खनिष्यामि पञ्चशाखेन पाणिना १९

1. कफ 2. करिष्

ओं नमः स्वस्त्योषधिभ्य ऊर्जावत्यो भविष्यथ ।
एकैकस्मिन्महद्वीर्यं कुरुध्वं प्रार्थयामि तत् ॥ २०
जिं ओं पदेश्वरि पच-उद्ने-उदाराय-उह्न-उदाराय-विम्रांस्तुभ्यं नमः ॥
अत्रैव नित्यं कल्याणि मम कार्यकरी भव ।
मम कार्ये कृते देवि पश्चात्स्वर्गं गमिष्यसि ॥" २१
इत्यनेनैव मन्त्रेण गृह्णीयादौषधं सुधीः ।
उदङ्मुखः प्राङ्मुखो वा युक्तं वर्णरसादिभिः ॥ २२
जन्त्वजग्धं दवादग्धमपि युक्तं न वैकृतैः ।
वातच्छायातपाम्ब्वाद्यैर्यथाकालं तु सेवितम् ॥ २३
असम्बाधममार्गस्थं विज्ञातं वीर्यवत्तरम् ।
अवगाढं महामूलमुदीचीं दिशमाश्रितम् ॥ २४
रात्रौ न मूलिका ग्राह्या राहोरन्यत्र दर्शनात् ।

॥ ऋतुविशेषेणौषधावयवग्रहणनिरूपणम् ॥

शाखापत्रं नवं तत्र ग्राह्यं वर्षावसन्तयोः ।
शीर्णप्ररूढपर्णानां मूलं शिशिरघर्मयोः ॥ २५
तत्रापि शिशिरे सौम्यं ग्रीष्मे त्वाग्नेयमिष्यते ।
सारं हिमागमे कन्दत्वक्क्षीराणि घनात्यये ॥ २६
पुष्पं फलं यथर्त्वेवमन्यथा विगुणं भवेत् ।

॥ सर्वर्तुषु योग्यानि ॥

सर्वर्तुकाः काण्डनाळशुङ्गस्वरसपल्लवाः ।
क्षारप्ररोहनिर्यासभस्मतैलानि कण्टकाः ॥ २७

॥ सौम्याग्नेयौषधोत्पत्तिदेशः ॥

हिमवद्विन्ध्यशैलाभ्यां प्रायो व्याप्ता वसुन्धरा ।
सौम्यं पथ्यं च तत्राद्यमाग्नेयं वैन्ध्यमौषधम् ॥ २८

॥ आरोग्यशालालक्षणम् ॥

आरोग्यशालानिर्माणलक्षणं संप्रकाश्यते ।
अथ साधारणे शुद्धे विविधौषधिवीरुधि ॥ २९

देशे नदीवनाद्रीणां नातिदूरे निरामये ।
प्रागुदीच्योर्दिशोर्भागे प्रशस्तां वास्तुविस्तरैः ॥ ३०
दृप्तां पूर्वोत्तरद्वारां गन्धपुष्पोपहारिणीम् ।
समां निवातां सर्वत्र प्रवातामेकदेशतः ॥ ३१
सर्वोपकरणैर्युक्तां सद्वैद्याधिष्ठितां शुभाम् ।
आरोग्यशालां कुर्वीत नित्यक्लृप्तबलिक्रियाम् ॥ ३२

## ॥ औषधानां वीर्यनिर्णये कालनियमः ॥

वर्षात्पुष्पं वरालाद्यमन्यद्गन्धपरिक्षयात् ।
फलपत्रादिकं वर्षाद्दारुकाण्डं द्विवर्षतः ॥ ३३
मूलं त्रिवर्षाद्बीजं च सारो वत्सरपञ्चकात् ।
निर्यासो दशमाद्वर्षादत ऊर्ध्वं न शस्यते ॥ ३४

## ॥ क्षीरादिनियमः ॥

पयो बाष्कयणं ग्राह्यं विण्मूत्रं तच्च नीरुजाम् ।
वयोबलवतां धातुपिञ्छशृङ्गखुरादिकम् ॥ ३५

## ॥ आर्द्राण्येव प्रयोज्यान्यौषधानि ॥

वासाकुटजकूष्माण्डशतावर्यमृतानिशाः ।
कोरण्टैरण्डलशुनखर्जूरबिसभूस्तृणम् ॥ ३६
पञ्चमूलं लघु महत्तृणाख्यं मांसमार्द्रकम् ।
शारिबाऽम्बुघनोशीरतमालं कन्दमौदकम् ॥ ३७
नित्यार्द्रमेव योग्यं तद्यदि शुष्कं न वीर्यदम् ।

## ॥ त्वग्राहितान्येव प्रयोज्यान्यौषधानि ॥

लशुनं पञ्चमूलं च गुळूची विश्वभेषजम् ।
शतावरी हरिद्रा च निस्त्वगेव प्रशस्यते ॥ ३८
अक्षटुण्टुककाश्मर्यपाटलाऽङ्कोलबिल्वकात् ।
मूलं निस्त्वग्ग्रहीतव्यं तद्वच्छुण्ठी तथाऽमृता ॥ ३९

## ॥ त्वग्ग्राह्याणि ॥

अर्काश्वघ्नाहृढतरैरपि (?) स्वर्णपुष्पी च घोण्टा-
मूर्वा नीली त्रिवृदपि बृहत्याकुली शारिवा च ।
कर्कन्धुश्च ज्वलनसुवहे मोरटः कासमर्दो
मूलादेषां त्वचमभिनवां ग्राहयेद्वैद्यवर्यः ॥ ४०
द्विकरञ्जारलुजम्बू-
कुटजलवङ्गादितस्त्वचो ग्राह्याः ।
श्यामोऽश्वमारबिम्बी-
चित्रकनील्यादिकान् मूलात् ॥ ४१

## ॥ अन्यच्च ॥

मुद्गाद्याः सत्वचो यूषे भक्ष्यादौ निस्त्वचो हिताः ।
कङ्कुणीवेल्लतुवरसर्षपाद्यास्तु निस्तुषाः ॥ ४२
अनिर्दिष्टौ प्रसिद्धेषु मूलं ग्राह्यं त्वगादिषु ।
मूलं वीर्यादिभूयिष्ठमौषधं परिचक्ष्यते ॥
मूलालाभे तु दातव्यं मूलतुल्यगुणं च यत् ॥ ४३

## ॥ प्रयोगार्हौषधालाभे प्रत्यौषधानि ॥

खर्जूरं वा मधूकं वा द्राक्षायाः स्यादलाभतः ।
पिप्पल्यां मरिचं, शुण्ठ्यामार्द्रकं वा कणोषणम् ॥ ४४
रास्नायां नागरं, मांस्यां जटा, मुस्ते कुटन्नटम् ।
वराळे धातकीपुष्पं, जीरके कृष्णजीरकम् ॥ ४५
भार्ङ्ग्यां निदिग्धिकामूलं यद्वा ताळीसपत्रकम् ।
शट्यां हिमं मृणालं वा, कुङ्कुमे पद्मकेसरम् ॥ ४६
अष्टवर्गे तु जीवन्ती मधुकं वा बलात्रयम् ।
गुग्गुळौ निम्बनिर्यासः, सैन्धवे लवणान्तरम् ॥ ४७
काळशाके तु वर्षाभूस्तदभावे तु नाडिका ।
करञ्जमूलं कट्वङ्गे, चित्रमूलमरुष्करे ॥ ४८

कापित्थं बिल्वमूलादौ, बलायां महती बला ।
दुरालभा धन्वयासे, पाठायां धन्वयासकम् ॥ ४९
निदिग्धिकायां बृहती, किंशुकं ब्रह्मभूरुहे ।
ग्रन्थिके मरिचं चव्यं, गण्डीरे बर्बरद्वयम् ॥ ५०
लामज्जके मलयजमुशीरे गोपकन्यका ।
दन्त्यां त्रिवृच्चित्रको वा, हरीतक्यां बिभीतकम् ॥ ५१
शर्करायां गुडक्षौद्रे, सुर्जार्णं तिलजं घृते ।
आजं गव्ये, पयस्याजे माहिषे चाविकं पयः ॥
क्षीरे मौद्गोऽथ वा यूषो, मासूरो मुद्गजे पुनः ॥ ५२
मसूरयूषे क्षीरं वा, व्रीहयः शालिजातिषु ।
तैले त्वेरण्डजे तैलं रक्तैरण्डोद्भवं तथा ॥ ५३
मयूरः कुक्कुटे, वन्यकुक्कुटश्चापि बर्हिजे ।
मांसेषु मत्स्या, मत्स्येषु शम्बूकास्तेषु शुक्तयः ॥ ५४
सुवर्णं रजते, लोहास्तदन्ये रजतेऽपि च ।
अन्योन्यमेवमन्यद्वा द्रव्यं युक्त्या प्रकल्पयेत् ॥ ५५

॥ अनिर्दिष्टद्रव्यविशेषेषु श्रेष्ठानि द्रव्याणि ॥

अनिर्दिष्टे घृते क्षीरे विशेषाद्द्रव्यमिष्यते ।
तैलेषु तिलतैलं स्याद्गोमूत्रं मूत्रकीर्तने ॥ ५६
क्षारेषु यावशूकः स्याल्लवणेषु च सैन्धवम् ।
लवणानां प्रयोगे च सैन्धवादीन् प्रयोजयेत् ॥ ५७

॥ मानकल्पनाप्रशंसा ॥

मात्राऽप्यपेक्षिणी यस्मात्कषायादिषु कल्पना ।
तस्मान्मात्राऽवबोधार्थं कथ्यते मानकल्पना ॥ ५८
षड् वंशयस्तु मरीचिः स्यात् षण्मरीच्यस्तु सर्षपः ।
अष्टौ ते सर्षपा रक्ततण्डुलश्चापि तद्द्वयम् ॥ ५९
धान्यमाषो भवेदेको, धान्यमाषद्वयं यवः ।
एतस्मात्तु यवादूर्ध्वं मण्डिकां मानिकां तथा ॥ ६०

शाणं पाणितलं मुष्टिं कुडुबं प्रस्थमाढकम् ।
द्रोणं वहं च क्रमशो विजानीयाच्चतुर्गुणम् ॥ ६१
हेमापि धानकोऽत्रेति माषकः स उदाहृतः ।
द्वौ शाणौ वटकं कोलं बदरं [1]द्रङ्क्षणश्च तौ ॥ ६२
अक्षं पिचुः पाणितलं सुवर्णं कवलग्रहः ।
कर्षो विडालपदकं तिन्दुकः पाणिमानिका ॥ ६३
शब्दान्यत्वमभिन्नेऽर्थे तथा षोडशिकेति च ।
तौ द्वौ पलार्धं [2]विज्ञेयं शुक्तिरष्टमिका तथा ॥ ६४
पलं प्रकुञ्चो बिल्वं च मुष्टिराम्रं चतुर्थिका ।
पलस्य दशमो भागः प्रोच्यते धरणं बुधैः ॥
[3]माषैः स्यात्तच्चतुर्भिर्वा निष्कं गुञ्जाऽष्टकादिभिः ॥ ६५
द्वे पले प्रसृतस्तद्वत्कुडुबार्धः
अष्टमानिका ॥
तौ द्वौ तु कुडुबं कुण्डं कुण्डः कुडि तथाऽञ्जलिः ।
तावञ्जली द्वौ कुडुबौ मानिकाऽष्टपलं तथा ॥ ६६
तदेतद् द्विगुणं प्रस्थं स षोडशपलः स्मृतः ।
आढकं भाजनं कंसं [4]पात्रं प्रस्थचतुष्टयम् ॥ ६७
भाण्डं समुद्रकदळं चषकं च
द्वयं शिवम् ।
द्रोणं शिवद्वयं कुम्भमर्मणो नल्वणं घटः ॥ ६८
अर्मणं कलशं चक्रं चतुराढकमिष्यते ।
तौ द्वौ कुम्भौ शूर्पकश्च तौ द्रोणी गोणिका वहः ॥ ६९
द्रोणीचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः ।
तुला पलशतं
तानि विंशतिर्भार उच्यते ॥
प्रस्थक्रमात्पुनः केचिद्भारं खारीत्रयं विदुः ॥ ७०

---

1. द्रुखुम
2. षण्णिष्क
3. माषाणां विंशतिर्यद्वा
4. प्रातपद्यमुरवं शुभम्

॥ मतान्तरम् ॥

जालान्तरगते भानौ योऽणीयान् वर्तते कणः ।
परमाणुः स सूक्ष्मत्वाद्भावग्राह्यो न चक्षुषा ॥ ७१
ते त्वष्टौ त्रसरेणुः स्याद्रथरेणुस्तदष्टकम् ।
तदष्टकं तुलाऽग्रं तु वालाग्रं स्यात्तदष्टकम् ॥ ७२
अष्टौ मयूरिकाबीजं तथा तेषां तिलोऽष्टकम् ।
तिलद्वयं काकिणी स्याद् व्रीहिस्तासां चतुष्टयम् ॥ ७३
तद्द्वयं बदरं ते द्वे गुञ्जा तद्द्वितयं पुनः ।
मञ्जिष्ठा, पञ्चकाः पादं, शाणं पादत्रयं भवेत् ॥ ७४
चतुःषष्टिप्रमाणं तु व्रीहीणां निष्कमुच्यते ।
अष्टनिष्कं पलं प्रोक्तं तेषां शतपलं तुला ॥ ७५
इति केचन शंसन्ति शेषमत्रापि पूर्ववत् ॥

॥ मतान्तरम् ॥

पञ्चाशद्रथरेणूनां काकिणीत्यभिधीयते ।
व्रीहिश्चतस्रः काकिण्यो व्रीहीणां विंशतिः पणम् ॥ ७६
पणानि दश निष्कं स्यात्तैर्द्वादशदशाष्टभिः ।
केचित् पलं त्रिधा प्राहुः श्रेष्ठमध्यावरं क्रमात् ॥ ७७
प्रबले मध्यमे पुंसि दुर्बले च तदिष्यते ।
काकिणी राजिकामात्रा काकिणीनां चतुष्टयम् ॥ ७८
व्रीहिश्चतुष्टयं तेषां गुञ्जा गुञ्जाचतुष्टयम् ।
पणं, पणद्वयं गुञ्जाद्वितयं चापि धानका ॥ ७९
धानकानां त्रयं शाणं, निष्कं स्यात्तच्चतुष्टयम् ।
अत्रापि पूर्ववच्छेषमित्याचार्याः प्रचक्षते ॥ ८०

॥ औरभ्रमतम् ॥

द्वे गुञ्जे माषकं विद्यान्निष्कं स्यान्माषविंशतिः
दशनिष्कं पलं प्रोक्तं तेषां पलशतं तुला ॥
द्रव्यमानमिति प्राहुरौरभ्राद्या महर्षयः ॥ ८१

## ॥ क्रोशादिलक्षणम् ॥

धनुःसहस्रं क्रोशः स्याद्गव्यूतिर्द्विगुणं तु तत् ।
गव्यूतयश्चतस्रस्तु योजनं परिभाषितम् ॥
अष्टौ धनुःसहस्राणि योजनं प्रोच्यते बुधैः ॥ ८२

## ॥ शालिहोत्रमतम् ॥

तिर्यग्यवोदराण्यष्टावूर्ध्वं वा व्रीहयस्त्रयः ।
प्रमाणमङ्गुलस्योक्तं प्रादेशो द्वादशाङ्गुलः ॥ ८३
प्रादेशो द्विगुणोऽरत्निश्चत्वारस्ते धनुः स्मृतम् ।
धनुःसहस्रे द्वे क्रोशश्चतुःक्रोशस्तु योजनम् ॥ ८४
इत्येवमङ्गुलादीनां मानं केचन मन्वते ।

## ॥ मानाङ्गुललक्षणम् ॥

नरस्य मध्यमं पर्व मध्यमाङ्गुलिसंभवम् ।
मानाङ्गुलमिति ख्यातं द्वियवं सर्वमध्यमम् ॥ ८५

## ॥ आर्द्रद्रवौषधमानम् ॥

द्विगुणं योजयेदार्द्रं कुडुबादि तथा द्रवम् ॥ ८६

## ॥ द्रवलक्षणम् ॥

द्रवं तु सलिलक्षीरघृततैलादिकं स्मृतम् ।
शुष्कद्रव्याश्रितं मानं निर्दिश्य यदुदाहृतम् ॥ ८७
द्रवेषु द्विगुणं मानमिहार्द्रेषु तथैव च ।
तदेतत्सर्वमारभ्य कुडुबादेरिहोच्यते ॥ ८८
शुष्काणां च द्रवाणां च समं तत्कुडुबादधः ।
तुलायामपि नैवेष्टा द्विगुणा मानकल्पना ॥ ८९
तुला पलशतं चैव तच्छुष्कद्रवयोः समम् ।
नैवाञ्जलौ न प्रसृते न पले नं पलादधः ॥ ९०
द्रवाणामौषधानां हि द्विगुणं मानमिष्यते ।
द्विगुणत्वे द्रवेषु स्यात्पलमष्टसुवर्णकम् ॥ ९१

तेनैवं द्विगुणत्वे न क्रियामार्गो विरुध्यते ।
कुडुवाद्यासु संज्ञासु द्रवाणां द्विगुणं विदुः ॥ ९२
विद्यते ज्ञापकं चात्र चरकाचार्यकीर्तितम् ।
स्पष्टार्थमेव पठितमिदं कुष्ठचिकित्सिते ॥ ९३

"सलिलाढकेऽष्टभागे
शेषे पूतो रसो ग्राह्यः ।
ते च कषायाष्टपले
चतुष्पलं सर्पिषश्च पक्तव्यम् ॥ ९४
यावत्स्यादष्टपलं
शेषं पेयं ततः कोष्णम् ।"

अष्टभागावशेषे तु पलानामष्टकद्वयम् ॥ ९५
पलस्य द्विगुणे माने क्रियमाणे न युज्यते ।
द्विगुणे तु पले तु स्यात्कदेमेव पलाष्टकम् ॥ (?) ९६
चतुष्पलं च दातव्यं यत्प्रोक्तं हविषा सह ।
पलस्य द्विगुणे माने तदप्यष्टपलं भवेत् ॥ ९७
चतुःसुवर्णं हि पलं शुष्काणामिष्यते यतः ।
द्विगुणत्वे द्रवाणां हि तत्स्यादष्टसुवर्णकम् ॥ ९८
निरूहमाननिर्देश एवं सति च बाध्यते ।
प्रसृतार्धं समारभ्य द्वादश प्रसृताः परम् ॥ ९९
एषा मात्रा द्विगुणिता द्विगुणा प्रसृते भवेत् ।
निरूहमात्रा शास्त्रोक्ता द्वादश प्रसृतास्तथा ॥ १००
व्याख्यादिषु तु मध्ये च काथस्य [1]प्रत ौ मतौ ।
तत्र सुश्रुतनिर्देशे काथोऽयं द्विगुणो भवेत् ॥ १०१
'स्वरसः कथितः शीतः कषायः षट्पलं भवेत्" ।
इत्युक्तं खरनादेन तद् द्वादशपलं भवेत् ॥ १०२
'पैत्तिके कथितं गुल्मे सर्पिषश्च चतुःपलम् ।
पिबेत्संमूर्च्छितं तेन गुल्मः शाम्यति पैत्तिकः ॥" १०३

---

1. अञ्जलिरिष्यते ।

चतुष्पलं घृतस्यैतन्मात्रा साऽष्टपलं भवेत् ।
स्वर्णक्षीरादिके योगे मूत्रास्याञ्जलिरिष्यते ॥ १०४
अञ्जलेर्द्विगुणत्वाद्धि मात्रा साऽष्टपला भवेत् ।
गौल्मिके त्रायमाणाद्यघृतस्य परिपठ्यते ॥ १०५
" रसस्यामलकानां च क्षीरस्य च घृतस्य च ।
पलानि पृथगष्टाष्टौ दत्त्वा सम्यग् विपाचयेत् ॥ " १०६
अष्टौ प्रत्येकमेतानि स्युः षोडशपलानि च ।
तस्मादेवंप्रकारेषु निर्दिष्टेषु विरुध्यते ॥ १०७
द्रवाणां द्विगुणं मानं तत्कार्यं कुडुबादिषु ।
आर्द्रेष्वपि न सर्वेषु द्विगुणं मानमिष्यते ॥ १०८
शुष्कप्रसिद्धद्रव्येषु सद्यस्केषु द्रुतेषु हि ।
शुष्कालाभात् प्रयोज्येषु द्विगुणं मानमिष्यते ॥ १०९
आर्द्रप्रसिद्धद्रव्ये तु यदा शुष्कं प्रयुज्यते ।
आर्द्रालाभे क्रियाकाले द्विगुणं स्यात्तदापि न ॥ ११०
शुष्का अपि प्रयुज्यन्ते दशमूलकुरण्टकाः ।
न हि ते द्विगुणं मानं प्रपद्यन्ते भिषक्तमैः ॥ १११
आर्द्राणामेव येषां तु प्रयोगमुपकल्पयेत् ।
वासाकृते वृषघृते तैले सहचरे यथा ॥ ११२
आर्द्राणां द्विगुणं मानमेवमादिषु नेष्यते ।
आर्द्राणामेव तेषां हि प्रयोगः शस्यते यतः ॥ ११३
शतावरीमूलतुलाश्चतस्रो याः प्रकीर्तिताः ।
न तत्र द्विगुणं मानं भिषग्भिः कैश्चिदादृतम् ॥ ११४

## ॥ द्रव्यविशेषेण प्रस्थेषु पलसङ्ख्याविशेषः ॥

अतः परं द्रव्यभेदात् प्रस्थमानमुदीर्यते ।
मागधं लौकिकं चेति द्विविधं प्रस्थमुच्यते ॥ ११५
मागधं षोडशपलं तदर्धं लौकिकं मतम् ।
लौकिकः षोडशपलो मागधो द्विगुणस्ततः ॥ ११६

इति प्रस्थं द्विधा प्राहुर्गजाश्वादिचिकित्सकाः ।
एष पक्षोऽतिमानत्वादत्र शास्त्रे न गण्यते ॥ ११७
अन्ये च हीनाः कथिता नेष्टाः कायचिकित्सकैः ।
द्वात्रिंशता पलैः प्रस्थः प्रोक्तः पायसलाजयोः ॥ ११८
मूत्रकाञ्जिकमस्त्वम्बुनाळिकेराम्भसामपि ।
मूलत्वग्दारुपत्राणां पुष्पस्य च फलस्य च ॥ ११९
शिलालवणमृल्लोष्ठलोहानां गोमयस्य च ।
पलैः षोडशभिः प्रस्थो रसस्याप्यौषधस्य च ॥ १२०
प्रस्थः पलैस्तु विंशत्या तैलमाक्षिकसर्पिषाम् ।
क्षीरस्य त्रिंशता प्रस्थो दध्नः स्यात् पञ्चपञ्चभिः ॥ १२१
गुडस्य सप्तदशभिरिति भोजमतस्थितिः ।
गुडस्य दशनिष्कं स्यात् पलमात्रेयभाषितम् ॥ १२२

॥ स्वरसादिकल्पनाभेदः ॥

अतः परं कषायाणां कल्पना परिकीर्त्यते ।
कषाययोनयः पञ्च रसा लवणवर्जिताः ॥ १२३
रसः कल्कः शृतः शीतः फाण्टश्चेति प्रकल्पना
पञ्चधैवं कषायाणां पूर्वः पूर्वो बलाधिकः ॥ १२४

॥ स्वरसस्य बलाधिक्यम् ॥

स्वबाह्याद्यपरामृष्टपटुशक्तेर्नवस्य च ।
द्रव्यस्य बलपूर्णस्य सारत्वाद्बलवान् रसः ॥ १२५

॥ कल्काच्छृतस्य न्यूनशक्तिता ॥

अग्निशक्त्यभिभूतत्वादसर्वाङ्गोपयोगतः ।
कल्कोक्तादेव तत्कल्पपरिमाणादिकादपि ॥
कल्कादतोऽप्यूनशक्तिः शृत इत्यभिधीयते ॥ १२६

॥ शृताच्छीतस्य न्यूनबलता ॥

शीताम्बुवासस्तब्धेषु द्रव्येषु पलमानतः ।
प्रक्षिप्तानामपां स्[illegible]माकृष्टावशक्तितः ॥ १२७

कल्कोदितात्तथा कालपरिणामादिभेदतः ।
शृतोक्तादप्यसकलक्षिप्तद्रव्योपयोगतः ॥
शीतो न्यूनः शृतात्कालदैर्घ्यादम्भोऽधिवासतः ॥ १२८

॥ शीतात् फाण्टस्य न्यूनबलता ॥

औषधस्याम्भसि स्वल्पकालावस्थाधिवासतः ।
फाण्टो न्यूनतरः शीतात् प्रागुक्तैरपि हेतुभिः ॥ १२९

॥ स्वरसलक्षणम् ॥

सद्यः समुत्थितात् क्षुण्णाद्यः स्रवेत्पटपीडितः ।
स्वरसः स समुद्दिष्टो निर्यासो रस इत्यपि ॥ १३०
अग्राह्यस्वरसद्रव्यं क्षोदयित्वा पचेज्जले ।
चतुर्भागावशिष्टं तत्पूतं स्वरसवद्भवेत् ॥ १३१
शुष्कं चूर्णीकृतं द्रव्यमाढकं सलिलाढके ।
अहोरात्रस्थमामृद्य पूतं तत्स्वरसायते ॥ १३२

॥ स्वरसप्रमाणम् ॥

मध्यं तु मानं निर्दिष्टं स्वरसस्य [1]पलार्धकम् ॥

॥ कल्कलक्षणम् ॥

कल्कस्तूपलपिष्टः स्याद्दशनैर्भक्षितोपमः ॥ १३३

॥ कल्कप्रमाणम् ॥

कल्कप्रमाणं कर्षः स्याद् द्रवं तत्र पलत्रयम् ॥

॥ चूर्णलक्षणम् ॥

चूर्णस्तु शुष्कः संपिष्टः सूक्ष्मतन्तुपटच्युतः ॥ १३४

॥ चूर्णस्य कल्कान्तर्भावः ॥

सर्वद्रव्यापरित्यागाद् द्रवे चाप्लुत्य सेवनात् ।
कल्कादभेदश्चूर्णस्य तस्य मात्राऽपि कल्कवत् ॥ ३५

1. चतुः फलम्

॥ कषायकल्पनम् ॥

क्वाथं द्रव्यपले कुर्यात् प्रस्थार्धं पादशेषितम् ॥

॥ क्वाथपर्यायः ॥

शृतः क्वाथश्च निर्यूहः कषायः पाक्यमुच्यते ॥ १३६

॥ फाण्टकषायलक्षणं प्रमाणञ्च ॥

सद्योऽभिषुतपूतस्तु फाण्टो द्रव्यपले लघुः ।

॥ मात्राया अनियमः ॥

मात्राया न व्यवस्थाऽस्ति व्याधिं कोष्ठं बलं वयः ।
आलोच्य देशकालौ च योज्यास्तद्वच्च कल्पनाः ॥ १३७

॥ कषायपानक्रमः ॥

प्रातः क्षुण्णं च विच्छिन्नं क्वाथ्यं द्वादशनिष्ककम् ।
प्रक्षाल्य सलिलैः शुद्धैः[1] सम्यक्कुट्टितमश्मना ॥ १३८
सुधौतलोहवलये रक्षाबन्धं च कारयेत् ।
पात्रे तु लौकिकप्रस्थद्वयसम्मितवारिणि ॥ १३९
आसुत्य वस्त्रैर्बद्ध्वाऽऽस्यमातपेऽग्न्यन्तिकेऽपि वा ।
निधाय सायं निर्धूमं शनैर्मृद्वग्निना पचेत् ॥ १४०
अष्टभागावशिष्टं च पूतं वस्त्रावकुण्ठितम् ।
पश्चादुद्धृत्य भिषजा प्राङ्मुखेन यथाविधि ॥ १४१
ब्रह्मा विष्णुश्च रुद्रेन्द्रभूचन्द्रार्कानिलानलाः ।
ऋषयश्चौषधग्रामा भूतसङ्घाश्च पान्तु वः ॥ १४२
रसायनमिवर्षीणाममराणामिवामृतम् ।
सुधेवोत्तमनागानां भैषज्यमिदमस्तु ते ॥ १४३
इत्याद्यैर्मन्त्रितं मन्त्रैर्भक्त्या क्वाथमुदङ्मुखः ।
अतल्पस्थः शुचिस्त्यक्तनिन्दाऽऽघ्राणेक्षणः पिबेत् १४४

---

1. समवपीठे

औषधोच्छिष्टमिच्छन्ति यस्माद्व्याध्यधिदेवताः ।
तस्मात्स्वनामतो भूमौ कुर्यात्पात्रमधोमुखम् ॥ १४५
क्षिप्त्वा भक्तवदासीत यावत् [1]पीतं प्रतिष्ठितम् ।
लाजान् क्रमुकखण्डं वा यद्वा नागलतादलम् ॥ १४६
रुच्यर्थी चर्वितं ष्ठीवेन्नान्यत्सेवेत किञ्चन ।

॥ कषायसेवनेऽयोग्यानि ॥

पानीयं मोदकं क्षीरं ताम्बूलं चाम्लकं रसम् ॥ १४७
खादनं पानकं नेष्टं क्वाथे पीते नृणां परम् ।
तृषि गण्डूषयेत्तोयं पानक्वाथेष्वयं क्रमः ॥ १४८

॥ कषायनियमः ॥

रात्रौ दोषाः प्रकुप्यन्ति शमनानि तथा निशि ।
युञ्ज्यात्संशोधनावह्निशमनानि विशेषतः ॥ १४९
प्रातरातपमहाग्निसमीपे
स्थापितं वसुविभागश्रृतं यत् ।
नाडिकाऽष्टसमये निशि पीतं
क्वाथमुत्तममशेषगदघ्नम् ॥ १५०

॥ मतान्तरम् ॥

नाडिकाऽष्टमवेलायां रात्रौ क्वाथादिकं भजेत् ।
नाडीचतुष्टये प्रातर्विना भक्तादिकामतः ॥ १५१
प्रातः सेव्यः कषायस्तु जीर्णान्नस्यैव शस्यते ।
निशां सुप्त्वोषसि पिबेत्प्रातः पेयं तथौषधम् ॥ १५२

॥ मतान्तरम् ॥

रात्रौ द्रव्यपले क्वाथं कुर्यादष्टावशेषितम् ।
तस्यार्धे वासरे क्वाथं चतुर्भागावशेषितम् ॥ १५३
प्रस्थार्धं पादपचनेऽप्यर्धभागावशिष्टतः । (?)
प्रकृतेः पादशेषित्वं द्विगुणं योजितः श्रृतम् ॥ (?) १५४

1. सीतं

॥ मतान्तरम् ॥

प्रातः क्वाथं प्रपिबे-
च्चतुष्टये नाडिकानां च ।
मध्याह्ने भक्तादौ
भक्तान्ते नाडिकाऽष्टसमये रात्रौ ॥ १५५

॥ प्रतीवापनियमः ॥

पानक्वाथे प्रतीवाप्यं क्वाथात् स्यात् षोडशांशकम् ।
स्नेहाद्यं ज्वरगुल्मादौ पादांशं वाऽष्टमांशकम् ॥ १५६
षोडशाष्टचतुर्भागं वातपित्तकफामये ।
क्षौद्रं कषाये दातव्यं विपरीता तु शर्करा ॥ १५७
शाणं दद्यात्प्रतीवापमर्धं तस्यार्धमेव वा ।
रुग्णशक्त्यनुरोधेन प्रकारास्त्रय ईरिताः ॥ १५८

॥ मतान्तरेण कषायकल्पनाकालनियमः ॥

यामैश्चतुर्भिर्द्वाभ्यां वा तत्तत्क्वाथ्याद्यपेक्षया ।
प्रकल्पयेद्दिवारात्रं क्वाथमित्याह वाल्लुकिः ॥ १५९

॥ भोजस्य मतेन कषायभेदः ॥

पानगण्डूषपानीयसेकाश्च्योतनसंश्रयः ।
व्रणप्रक्षालनमुखक्षालनोष्णोदकात्मकः ॥ १६०
कषायवस्तिवमनविरेकस्नानतोयकः ।
पेयास्नेहाश्रयश्चेति क्वाथभेदाश्चतुर्दश ॥ १६१

॥ पानकषायः ॥

क्वाथ्यं तु षोडशपले जले द्रव्यपलं क्षिपेत् ।
पाने कषाये तत्कुर्यादष्टभागावशेषितम् ॥ १६२

॥ पानकषायपाकक्रमः ॥

त्वक्पत्रमूलसाराणामेकत्र परिपाचनात् ।
अष्टभागावशिष्टत्वादेकाहं पाक इष्यते ॥ १६३

॥ गण्डूषकषायः ॥

गण्डूषे पञ्चभागस्थं जलं द्रव्याच्चतुर्गुणम् ।

॥ पानीयकषायः ॥

पानीये कार्षिकं द्रव्यं प्रस्थाम्ब्वर्धावशेषितम् ॥ १६४

॥ सेकाश्च्योतनकषायः ॥

सेकाश्च्योते षड्गुणितं जलं षड्भागशेषितम् ।

॥ व्रणप्रक्षालनकषायः ॥

त्रिगुणं द्वादशांशस्थं व्रणप्रक्षालने जलम् ॥ १६५

॥ मुखप्रक्षालनकषायः ॥

मुखप्रक्षालनेऽम्भोऽष्टगुणितं नवभागिकम् ।

॥ उष्णोदककषायः ॥

उष्णोदके जलं शस्तं त्रिभागपरिशेषितम् ॥ १६६

॥ आस्थापनकषायः ॥

आस्थापनेऽष्टगुणितं सप्तभागावशेषितम् ।

॥ वमनकषायः ॥

वमने त्रिगुणं तोयमर्धभागावशेषितम् ॥ १६७

॥ विरेचनकषायः ॥

विरेचने षड्गुणितमष्टभागावशेषितम् ।

॥ स्नानोदककषायः ॥

स्नानतोयं चतुष्षष्टिगुणमर्धावशेषितम् ॥ १६८

॥ यवागूकषायः ॥

यवाग्वामर्धभागस्थं चतुःषष्टिगुणं जलम् ।

॥ स्नेहकषायः ॥

स्नेहे चतुर्गुणं द्रव्याज्जलं पादावशेषितम् ॥

इति भोजेन कथिताः क्वाथभेदाः सलक्षणाः ॥ १६९

॥ मतान्तरम् ॥

अर्धं पादं पदार्धं पदपदशकलं पञ्चभागावशिष्टं
द्वात्रिंशांशावशिष्टं चरकमतमिदं (?) शास्त्रतत्त्वार्थकारैः ।
सेके स्नेहे कषाये व्रणमलहरणे चैवमाश्च्योतनार्थे
गण्डूषार्थे निरूहे क्रमपरिपाठिताः सप्तभेदाः कषायाः ॥ १७०

॥ स्नेहकषायपाकक्रमः ॥

शुण्ठीधान्यरसोनलाजकुसुमं मांसं च सद्यः पचे-
द्वल्लीकन्दफलत्वचास्त्रिदिवसं मूलं च सारं क्रमात् ।
सप्तद्वादशवासरेष्वपि च तत् क्काथेषु पक्वं क्रमात्
........................ ॥ (?) १७१

मूलत्वक्सारकाण्डाद्यं काथ्यमातपशोषितम् ।
छेदयित्वाऽणुशश्छेद्यं भेद्यं सर्वं विभिद्य च ॥ १७२
प्रक्षाल्य सलिलैः शुद्धैर्यवक्षुण्णमुलूखले ।
क्षिप्त्वा पिष्टैः प्रलिप्ते तु श्लक्ष्णमृद्रोमयादिभिः ॥ १७३
ताम्रे कटाहे सुमहत्यायसे मृन्मये तथा ।
संश्लिष्टकण्ठे सूत्रेण सलोहवलयेन च ॥ १७४
बुद्ध्वा बह्वल्पपानीयग्राहितामौषधस्य च ।
यावता मुक्तरसता काथ्यद्रव्यस्य जायते ॥ १७५
तावता सेचयेत्तोयं शेषयेच्च तथा शृतम् ।

॥ षोडशगुणपक्षे कषायकल्पना ॥

द्रव्याणि षोडशगुणे सलिले काथयेद्भिषक् ॥ १७६
चतुर्थशेषः पूतस्तु कषायो ग्राह्य इष्यते ।
यदि काथ्येष्वमीषूक्ततोयादन्यद् द्रवं भवेत् ।
रसमूत्रसुराक्षीरमस्तुतक्राम्लकाञ्जिकम् ।
जलवत् षोडशगुणं तत्स्यात्पादावशोषितम् ॥ १७७
स्नेहादि[1]साधनायोक्तो निर्यूहो यत्र यत्र वै ।
तत्रापि षोडशगुणपक्षोऽयं परिगृह्यते ॥ १७८

1. सादनयोक्त्या

कषाय एव चेत्तत्र द्रवार्थं केवलो भवेत् ।
द्रव्यं स्नेहसमं काथ्यमत्र पक्षे प्रयुज्यते ॥ १७९
तथाऽन्यदपि तत्रोक्तं [1]द्रवं क्षीरादिकं यदि ।
ततोऽनुरूपं संख्याय द्रवं तोयेन साधयेत् ॥ १८०
द्रव्यं स्नेहसमं काथ्यमन्यत्रापि द्रवे सति ।
न तत्र युज्यते तस्मादनुरूपेण कल्पयेत् ॥ १८१

॥ सुश्रुतादिमतेन अष्टगुणपक्षे कषायादिकल्पनाभेदः ॥

सुश्रुताद्याः पुनः प्राहुरन्यथा काथकल्पनम् ।
द्रव्यादष्टगुणं तोयं कुर्यात्पादावशेषितम् ॥ १८२
काथ्यं तु भवति स्नेहादत्र द्विगुणमौषधम् ।
कषायेण पचेत् साध्यं सत्यन्यस्मिन् द्रवे तथा ॥ १८३
साधयेदनुरूपेण जलेन काथ्यमौषधम् ॥

॥ रविगुप्तादिमतेन चतुर्गुणपक्षे कषायादिकल्पनाभेदः ॥

रविगुप्तादयः प्राहुरिदं निर्यूहकल्पनम् ।
चतुर्गुणेन तोयेन काथ्यान्निष्काथयेदिति ॥ १८४
एष एव विशेषोऽत्र शेषमत्रापि पूर्ववत् ।

॥ पलव्यपेक्षया प्रस्थव्यपेक्षया च कषायकल्पनक्रमः ॥

पलव्यपेक्षया द्रव्यं यदि तोयं चतुर्गुणम् ।
काथ्यं तु भेषजं स्नेहादत्र पक्षे चतुर्गुणम् ॥ १८५
प्रस्थव्यपेक्षया द्रव्यं यदि तोयं चतुर्गुणम् ।
क्रियते द्विगुणः काथस्ततः स्नेहे प्रयुज्यते ॥ १८६
आर्द्राणां द्विगुणः प्रस्थः शुष्कात्प्रस्थाद्यतो मतः ।
इत्येवं त्रिविधः कल्पः कषायस्य प्रकीर्तितः ॥ १८७

॥ चतुर्गुणपक्षस्य स्नेहपाके योग्यत्वम् ॥

कषायकल्पे त्रिविधे यच्चतुर्गुणितोदकम् ।
कषायकल्पः स्नेहेषु साध्येष्वेष समाश्रितः ॥ १८८

1. द्रव्यं

वैद्यैः प्रायेण न तथा यः षोडशगुणोदकः ।
चतुर्गुणोदके पक्षे स्नेहाद् द्रव्यं चतुर्गुणम् ॥ १८९
अष्टाविंशत्पलशतं काथ्यद्रव्यस्य जायते ।
स्नेहप्रस्थे विपक्तव्ये शुष्कं तच्च भवेद्यदि ॥ १९०
आर्द्रं चेदुद्धृतं सद्यस्तथा पलशतद्वयम् ।
स्नेहप्रस्थे भवेत्साध्यं षट्पञ्चाशत्पलाधिकम् ॥ १९१
एवं बहुत्वाद् द्रव्यस्य यश्चतुर्गुणितोदकः ।
स कल्पो हि मतस्तत्र स्नेहः स्याद्वीर्यवत्तरः ॥ १९२
सहस्रपाकाः स्नेहास्तु शतपाकाश्च कीर्तिताः ।
सुभावितं ह्यल्पमपि द्रव्यं बहु च कर्मकृत् ॥ १९३
तस्माद्बहुतरं द्रव्यं यत्र पक्षे प्रयुज्यते ।
स्नेहपाकेष्वयं श्रेयानिति के चन मन्वते ॥ १९४

## ॥ मतान्तरे कठिनादिद्रव्यभेदेन उदकप्रमाणम् ॥

काथ्ये तु कठिने मध्ये मृदुन्यपि यथाक्रमम् ।
केचिद्वदन्ति पानीयं षोडशाष्टचतुर्गुणम् ॥ १९५

## ॥ औषधभेदेन पाककालनियमः ॥

द्वादशाहं तु साराणां सर्वेषां पाक इष्यते ।
सप्ताहं सर्वमूलानां वल्लीनां तु त्र्यहं स्मृतम् ॥ १९६
एकाहं शाकजातीनां पत्रपुष्पफलात्मनाम् ।
कन्दस्य शुण्ठीलशुनमुस्तादेरोदनस्य च ॥ १९७
मुद्गमाषकुलत्थादिधान्यानां यवलाजयोः ।
मांसस्य चेत्ययं स्नेहकषाये कालनिर्णयः ॥ १९८

## ॥ एकस्मिन् दिने पत्रादीनां पाके कालविशेषः ॥

॥ कठिनादिद्रव्याणां क्षेपणे कालनियमः ॥

आदौ मूलादिकठिनं मध्ये मध्यं त्वगादिकम् ।
अन्ते मृदूनि पत्राणि क्षिप्त्वा क्वाथं क्रमात्पचेत् ॥ २००
द्रव्याणां वीर्यहानिः स्यादुक्तकालातिलङ्घनात् ।
इत्याहुरन्ये मुनयः स्नेहादिक्वाथसाधने ॥
तैरप्येष क्रमः पानकषायादिषु नादृतः ॥ २०१

॥ इत्यायुर्वेदचिन्तामणौ भेषजकल्पाधिकारः ॥

## ॥ अथ विषप्रत्यौषधाधिकारः ॥

### ॥ शार्ङ्गेष्टादिद्रव्योपयोगविकारप्रशमनम् ॥

शार्ङ्गेष्टायां पायसं शीततोयं
शुण्ठीं युञ्ज्याद् दृष्टकर्मा विकारे ।
शीतं तक्रं पिष्टजे तोयमिष्टं
कोष्णं वा स्यादाज्यपक्वे विकारे ॥ १

कटुकीफलदीप्यविश्वजम्बू-
मरिचोष्णाम्बुकपित्थतक्रपेयाः ।
घृतजे विहितास्तथैव पूग-
प्रभवे तक्रमुशन्ति भूरितैले ॥ २

भृङ्गं नक्तं तीक्ष्णमेवं कटुश्च
क्षौद्राज्ये स्याल्लङ्घनं तुल्यपीते ।
क्षीरजाम्बवविषे मधुकं स्या-
न्नीलिका त्वखिलजेऽपि विषे स्यात् ॥ ३

शुण्ठीमषीतैलतिलोषणांश्च
निशाऽक्षपथ्याघृतकाकतिक्ताः ।
दुग्धोद्भवे जीवलतां विकारे
वदन्ति वैद्याः पृथगेव तज्ज्ञाः ॥ ४

तैले शस्तं शिंशपासारसिद्धं
तोयं खार्यां तक्रपिण्याकपानम् ।
तोयक्षौद्रे स्याच्च भागेन तुल्ये
शान्ताङ्गारं पानयोग्यं भिषग्भिः ॥ ५

कांस्योषिताज्ये त्रिफला प्रशस्ता
सुखोदकं चार्द्रकमिष्टभुक्ते ।

अङ्कोलमूलं गुळशर्करे च
लता पलाशप्रभवप्रसूने ॥ ६
शिरीषजे दुग्धयुता च पथ्या
उशीरमेवासनजे प्रसूने ।
मधूष्णजे वा कतकं प्रशस्तं
शीताम्बु नालं भिषजो वदन्ति ॥ ७
जलं तु शीतं मधुनो विकारे
योग्यं तथा पायसमत्र शस्तम् ।
स्यान्नाळिकेरीप्रयसः प्रयोगः
[1]पीतेऽर्कदुग्धे प्रवदन्ति सन्तः ॥ ८
पाताळमूल्यां तिलनाळिकेर-
दुग्धं च तैलाभयशिंशपाश्च ।
करञ्जे निम्बमरीचकं च
नील्यां च पथ्यं घननादमूलम् ॥ ९
शतावरी स्यात् त्रिवृतो विकारे
सर्पारिवल्को दिनकृल्लता च ।
तक्रं गुळं पुष्पभवो रसश्च
स्याद्वैरिकं वा मदनोद्भवे तु ॥ १०
दन्त्युद्भवे भानुलताऽरिमेदं
शतावरी चापि भिषग्जितं स्यात् ।
पुनर्विकारे गिरिकर्णिकायाः
सिसोर्थदोषे (?) विहितः शिरीषः ॥ ११
लवणे केतकी प्रोक्ता शाल्मली मरिचेषु च ।
गन्धर्वहस्तमृदिता चाङ्कोले तु हरीतकी ॥ १२
नृपतरुकुसुमाभये सतैले
भुजगलता तिलजाक्तजीरकं वा ।

---

1. भूतोऽर्थ

शमयति च पलाण्डुजं विकारं
लशुनभवे जलसेव्यकुष्ठपथ्याः ॥ १३
कन्देषु सर्वेषु शृतोष्णतोयं
तालस्य मूले च फले च शस्तम् ।
[1]दण्डाहतं वा लवणप्रगाढं
तथैव मण्डं प्रवदन्ति सन्तः ॥ १४
स्पृक्का हिता रम्यकजे विकारे
विषे च कन्दस्य महीभवस्य ।
ग्रन्थिः समूलो विहितं तिलोत्थं
शम्याकपुष्पं वनसूरणस्य ॥ १५
सिता मरीचं बदरीशिफा च
हिताऽऽकुली कङ्गुशिफा च शस्ता ।
पैशाचमूलं गरभुक्तिजाते
स्यात्कुण्डली क्षौद्रयुताऽश्वमारे ॥ १६
[2]कीटे चोषणभृङ्गतोयतिलजं नीलीदळं शस्यते
क्षौद्रं ताळशिफाऽऽदिकं च फलिनीं रक्ताख्यकीटे विदुः ।
लूतोत्थां विकृतिं निहन्ति सरला गुञ्जाफलं पायसं
दोषे क्षीरमथार्कजं च विहितं षड्बिन्दुकीटोद्भवे ॥ १७
सपद्मकेसरं शङ्खं जम्बूर्मुद्गं च भृङ्गजे ।
जलकुक्कुटजे शस्तं शरपुङ्खं सनागरम् ॥ १८
मत्स्ये तु तक्रं वरणस्य पत्रं
शार्ङ्गेष्टपत्रं सलिलं च शीतम् ।
गुञ्जा शिग्रुशिफा कपित्थजफलं गोधात्वचो बर्हिजे
जम्ब्वारग्वधकालशेयकटुकीयोगो वराहोद्भवे ।
आजे कोलकपित्थमस्तु कुरवं शस्तं तथाऽवेः पले
खारीतक्रतिलोद्भवं प्रतिविषं सर्पारिवल्कं तथा ॥ १९

1. तक्रमित्यर्थः 2. किटी

कुक्कुटपिशिते शिग्रुशिफा स्यात्

त्वक्च तथा विहिता भुजगारेः ।

मूषिकपलले शिग्रुजटा स्या-

न्मूषिकमेव हितं शशजे तु ॥ २०

रुरोश्च गोधा मरिचं च शस्तं

तथा महिष्या मदनस्य मूलम् ।

मसूरगुञ्जाभुजगारिवल्कलं

शिग्रोश्च मूलं पशुजे पले स्यात् ॥ २१

शुञ्झोरिछल्याः कोष्णमम्भः प्रशस्तं

पाठा शुण्ठी पत्रदोषे मुनेः स्यात् ।

तैलं तक्रं नागरं [1]पानसे स्या-

द्रव्याम्लं स्यान्नालिकेरं च चूते ॥ २२

शार्ङ्गेष्टामरिचं फले कदलिजे स्यान्नालिकेरोद्भवे

शाल्यास्तण्डुलमाम्रसंभवफले शंसन्ति विश्वौषधम् ।

श्रेष्ठाम्भः कतके हितं पललजो लेपो हितः शूकजे

शस्तं मूलफलेषु कोष्णसलिलं सर्वेष्वपि प्राणिनाम् ॥ २३

धात्रीनिम्बपटोलपत्रमुषसि क्वाथं मधुक्षीरयो-

र्भक्तस्यान्यतरेण वा लिकुचचस्याद्वुस्तिलानां परम् । (?)

वन्दाकं तलपोटचूर्णमथवा साङ्कोलचूर्णेन वा

युक्तं पाचितवस्त्रवल्लिमनिशं भुक्त्वा सुखी स्यान्नरः ॥ २४

लोध्रं नीली वाजिगन्धा त्रिशूलं

हन्यात्सर्वं तण्डुलीयं विषं तत् ।

छर्दिद्रव्यैर्वामयेद्वा विषं त-

च्छस्तं पश्चाल्लङ्घनं वा विरेकः ॥ २५

सर्वं पथ्ये (?) मदच्छर्दिस्मृतिविभ्रंशकम्पनात् ।

धत्तूरे कोरदूषे च सहसा तत्र वामयेत् ॥ २६

1. पानसि

पुराणवृक्षाम्लयुतं कटुत्रयं
नरेण भुक्तं त्वशनावसाने ।
असाधुवृत्त्याऽबलयाऽर्थकाङ्क्षया
रसान्नदत्तं विषमाशु नाशयेत् ॥ २७

कनकशारदतीक्ष्णनिदिग्धिका-
हपुषसिद्धखलाल्पनिषेवणात् ।
जयति साधु युवा धनकाङ्क्षया
गणिकया गरदत्तविषं परम् ॥ २८

पारदसमुत्थदोषे
नागसमाख्यं त्रिशूलिमुनिपुष्पम् ।
गुञ्जाफले तु टङ्कण-
मभया वासा च कल्किता पेया ॥ २९

रक्तपुष्पकपालिकानिशितत्रिणीसहितोदन प्रस्पर्शमाप
यदा तदाशु विषं भवेदवचार्यताम् । (?)
भुक्तवानत ऊर्ध्वमप्यवचार्यते गतचन्द्रक
स्तम्भिषग्पुननादमूलविलेपनैः परिपालयेत् ॥ (?) ३०

॥ इत्यारोग्यचिन्तामणौ विषप्रत्यौषधाधिकारः ॥

# ॥ अथ क्रियाकल्पाधिकारः ॥

## ॥ वमनविरेचनकल्पः ॥

वमनं स्रंसनं चैव निरूहमनुवासनम् ।
नस्यकर्म तथा प्रोक्तं कर्म पञ्चविधं बुधैः ॥ १
न स्नेहस्वेदरहिता क्रिया काचित्प्रवर्तते ।
तस्मादादिक्रिया ह्येषा स्नेहस्वेदाविधिर्नृणाम् ॥ २
रूक्षक्षतविषार्तानां वातपित्तविकारिणाम् ।
हीनमेधास्मृतीनां च सर्पिःपानं प्रशस्यते ॥ ३
क्रिमिकोष्ठानिलाश्लिष्टास्तैलम् ......... ।
...........शीताम्बुपरिषेचितः ॥ ४
पिबेत्फलरसैर्मन्थं सघृतक्षौद्रशर्करम् ।
सोद्गारायां भृशं छर्द्यां मूर्छायां धान्यमुस्तयोः ॥
समधूकाञ्जनं चूर्णं लेहयेन्मधुसंयुतम् ॥ ५

अथ वमितवन्तं पुनरेव स्नेहस्वेदाभ्यम् उपपाद्य श्वो विरेचयितव्य इति सुजरमश्लेष्मलं स्निग्धं रुलाम्लमुष्णमुष्णोदकानुपानं जाङ्गलरसौदनं भोजयेत् ॥ ६

ततः सुखोषितं पूर्वोक्तेन विधिना अतीते श्लेष्मकाले निरन्नं विभज्य कोष्ठं यथार्हौषधमात्रां पाययेत् ॥ ७

न त्वकृतवमनमन्यत्रातिक्रूरकोष्ठात्। अकृतवमनस्य हि श्लेष्मणा सहितमौषधमूर्ध्वं प्रवर्तते। उरसि वा रुद्धमवतिष्ठते। ततो नालं विरेकाय। सम्यग्विरिक्तस्यापि चाधःस्रस्तः श्लेष्मा ग्रहणीं छादयित्वा गौरवमापादयति प्रवाहिकां वा । श्लेष्मकालेऽप्यकृतवमनोक्तो दोषः । शूलाध्मानगौरवाणि वा कुर्यात् । क्षीणे श्लेष्मण्यपराह्णे रात्रौ वा विरेचयेत्। पीतमात्र एव चौषधे छर्दिविघाताय शीताम्बुना मुखमस्य सहसा सिञ्चेत् । तत उष्णोदकेन सान्तर्मुखं विशो-

ध्यार्द्रसुरभिमृन्मातुलुङ्गजम्बीरसुमनस्सौगन्धिकादीनि हृद्यगन्धान्युपजिघ्रेत्। निवातसुखशय्यास्थितश्चाविबन्धार्थमल्पाल्पमुष्णोदकमनु [1]पिबेत्। तन्मना वेगानुदीरयमाणः शय्यासन्ने प्रतिग्रहे आसीनो विरिच्येत। यथा च वमने स्वेदप्रसेकौषधकफपित्तानिलाः क्रमेण प्रवर्तन्ते एवं विरेचने मूत्रपुरीषपित्तौषधकफाः। अतश्चान्यथा वायुप्रवृत्तौ तु भेषजोत्तेजनार्थमुष्णोदकं पाययेत्। पाणितापैश्च जठरं स्वेदयेत्॥ ८

विरेचनं पीतवांस्तु न वेगान् धारयेद् बुधः।
निवातशायी शीताम्बु न स्पृशेन्न प्रवाहयेत्॥ ९

हृत्कुक्षिशुद्धं परिशुद्धदेह-
मुष्णाभिरद्भिः परिषिक्तगात्रम्।
कुलत्थमुद्गाढकिजाङ्गलानां
यूषै रसैर्वाप्युपभोजयीत॥ १०

कोष्ठस्त्रिविधः—[2]मृदुः क्रूरो मध्यमश्च। तत्र मृदुः सुविरिच्यते क्षीरेक्षुरसतक्रमस्तुगुडकेसरसर्पिर्नवमद्योष्णोदकपीलुद्राक्षापूगफलादिभिः। बहुवातः क्रूरः। स दुर्विरेच्यः त्रिफलातिल्वकत्रिवृन्नीलिदन्तिफलादिभिरपि। बहुश्लेष्मा समदोषश्च मध्यमः॥ ११

कासोपलेपस्वरभेदनिद्रा-
स्तन्द्राऽऽस्यदौर्गन्ध्यविषोपसर्गाः।
कफप्रसेकग्रहणीप्रदोषा
न सन्ति जन्तोर्वमतः कदा चित्॥ १२

"यदा तु वमनं पीतं न च्छर्दयति मानवः।
किं तत्र भेषजं कुर्यात्कथं वैद्यः समाचरेत्॥" १३

इति प्रश्ने कृते,
मक्षिकाकेशचूर्णानि तक्रमण्डेन योजयेत्।
एतेन हि प्रयोगेण क्षिप्रं प्रच्छर्दयेन्नरः॥ १४
एषा क्रिया समाख्याता दुर्वमानां विशेषतः।
वमनस्यातिय्यास्थितं स्नेहोक्तेनाचारविधिना तुष्यात्॥ (?) १५

---
1. कण्टय 2. मधुः

ततोऽग्निबलमवेक्ष्य [1]क्षुधां च सायाह्ने सुखोदकपरिषिक्तः पुराणानां रक्तशालितण्डुलानां सुसिद्धसिक्थमन्नमस्नेहकटुलवणमल्पस्नेहं वा द्रवप्राय-मुष्णोदकानुपानं सायंप्रातरुपयुञ्जानो विधिं सेवेत ॥ १६

[2]पेयां विलेपीमकृतं कृतं च
यूषं रसं त्रीनुभयं तथैकम् ।
क्रमेण सेवेत नरोऽन्नकालान्
[3]प्रधानमध्यावरशुद्धिशुद्धः ॥ १७
यथाऽणुरग्निस्तृणगोमयाद्यैः
सन्धुक्ष्यमाणो भवति [4]क्रमेण ।
महान् स्थिरः सर्वपचस्तथैव
शुद्धस्य पेयाऽऽदिभिरान्तराग्निः ॥ १८
जघन्यमध्यप्रवरे तु वेगा-
श्चत्वार इष्टा [5]वमने षडष्टौ ।
दशैव ते द्वित्रिगुणा विरेके
प्रस्थस्तथा स्याद् द्विचतुर्गुणश्च ॥ १९
पित्तावसानं वमनं विरेका-
दर्धं कफान्तं च विरेकमाहुः ।
द्वित्रान् सविट्कानपनीय वेगान्
मेयं विरेके वमने तु पीतम् ॥ २०
[6]हृत्कुक्ष्यशुद्धिः परिदाहकण्डू-
विण्मूत्रसंगाश्च न संद्विरिक्ते ।
मूर्छागुदभ्रंशकफातिवृत्ति-
शूलोद्गमाश्चातिविरिक्तलिङ्गम् ॥ २१

1. दुदां
2. पीयां
3. प्रदानमयादर
4. क्षणेन
5. दमने
6. ततोऽपराह्ने सुविशुद्ध

गतेषु दोषेषु कफान्तिकेषु
ग्लान्यां लघुत्वे मनसश्च तुष्टौ ।
गतेऽनिले चाप्यनुलोमभावं
सम्यग्विरिक्तं मनुजं व्यवस्येत् ॥ २२

॥ त्रिवृत्कल्पः ॥

कषाया मधुरा रूक्षा विपाके कटुका त्रिवृत् ।
कफपित्तप्रशमनी रौक्ष्याच्चानिलकोपनी ॥ २३
सेदानीमौषधैर्युक्ता वातपित्तकफापहैः ।
कल्पवैशेष्यमासाद्य जायते सर्वरोगजित् ॥ २४
द्विधा [1]व्याख्यं च तन्मूलं श्यामं श्यामारुणं त्रिवृत् ।
त्रिवृदाख्यं परतरं निरपायं विरेचनम् ॥ २५
सुकुमारे शिशौ वृद्धे मृदुकोष्ठे च तद्धितम् ।
मूर्छासंमोहहृत्कण्ठकषणक्षणनप्रदम् ॥ २६
श्यामं तीक्ष्णाशुकारित्वादतस्तदपि शस्यते ।
क्रूरे कोष्ठे बहौ दोषे क्लेशक्षमिणि चातुरे ॥ २७
गम्भीरानुगतं श्लक्ष्णमतिर्यग्विसृतं च तत् ।
गृहीत्वा विसृजेत् [2]काष्ठं त्वचं शुष्कां निधापयेत् ॥ २८
अथ काले ततश्चूर्णं किञ्चिन्नागरसैन्धवम् ।
वातामये पिबेदम्लैः पैत्ते साज्यसितामधु ॥ २९
क्षीरद्राक्षेक्षुकाश्मर्यस्वादुस्कन्धवरारसैः ।
कफामये पीलुरसमूत्रमद्याम्लकाञ्जिकैः ॥
पञ्चकोलादिचूर्णैश्च युक्त्या युक्तं कफापहैः ॥ ३०

॥ त्रिवृल्लेहः ॥

त्रिवृत्कल्ककषायेण साधितः ससितो हिमः ।
[3]मधुत्रिजातसंयुक्तो लेहो हृद्यं विरेचनम् ॥ ३१

---

1. द्व्याख्यं   2. कोष्ठं   3. श्रीजात

## ॥ अविपत्तिगुळिका ॥

व्योषत्रिजातकाम्भोदकृमिघ्नामलकैस्त्रिवृत् ।
सर्वैः समा समसिता क्षौद्रेण गुळिकीकृता ॥ ३२
मूत्रकृच्छ्रज्वरच्छर्दिकासशोषभ्रमक्षये ।
तापे पाण्ड्वामयेऽल्पेऽग्नौ शस्ता सर्वविषेषु च ॥ ३३
अविपत्तिरियं नाम्ना प्रशस्ता पित्तरोगिणाम् ।
(व्योषादिसमा त्रिवृत्; दशभिः सर्वैः समा सिता ॥ ३४
व्योषादिनवभिस्सर्वैस्त्रिवृत्समा; त्रिवृत्समा सिता ।
स्वेन समा सिता त्रिवृत्समा शर्करेत्यर्थः ॥
एवं योजनाद्वयम् ॥) ३५

## ॥ ऋतुभेदेन त्रिवृत्प्रयोगः ॥

त्रिवृता कौटजं बीजं पिप्पली विश्वभेषजम् ।
क्षौद्रद्राक्षारसोपेतं वर्षाकाले विरेचनम् ॥ ३६
त्रिवृद्दुरालभामुस्ताशर्करोदीच्यचन्दनम् ।
द्राक्षाऽम्बुना सयष्ट्याह्वसातलं जलदात्यये ॥ ३७
त्रिवृतां चित्रकं पाठामजाजीं सरळं वचाम् ।
स्वर्णक्षीरीं च हेमन्ते चूर्णमुष्णाम्बुना पिबेत् ॥ ३८
त्रिवृता शर्करातुल्या ग्रीष्मकाले विरेचनम् ।
त्रिवृत्त्रायन्तिहपुषासातलाकटुरोहिणीः ॥ ३९
स्वर्णक्षीरीं च सञ्चूर्ण्य गोमूत्रे भावयेत् त्र्यहम् ।
एवं सर्वर्तुको योगः स्निग्धानां मलदोषहृत् ॥ ४०

## ॥ राजवृक्षकल्पः ॥

राजवृक्षोऽधिकं पथ्यो मृदुर्मधुरशीतलः ।
बाले वृद्धे क्षते क्षीणे सुकुमारे च मानवे ॥ ४१
योज्यो मृद्वनपायित्वाद्विशेषाच्चतुरङ्गुलः ।
फलकाले परिणतं फलं तस्य समाहरेत् ॥ ४२

तेषां गुणवतां भारं सिकतासु विनिक्षिपेत्।
सप्तरात्रात्समुद्धृत्य शोषयेदातपे ततः ॥ ४३
ततो मज्जानमुद्धृत्य शुद्धपात्रे निधापयेत्।
द्राक्षारसेन तं दद्याद्दाहोदावर्तपीडिते ॥ ४४
चतुर्वर्षे सुखं बाले यावद्द्वादशवार्षिके।

॥ सुधाकल्पः ॥

सुधा भिनत्ति दोषाणां महान्तमपि संचयम् ॥ ४५
आश्वेव कोष्ठविभ्रंशान्नैव तां कल्पयेदतः।
मृदौ कोष्ठेऽबले बाले स्थविरे दीर्घरोगिणि ॥ ४६
कल्प्या गुल्मोदरगरत्वग्रोगमधुमेहिषु।
पाण्डौ दूषीविषे शोफे दोषविभ्रान्तचेतसि ॥ ४७
स्नुक्क्षीरप्रसृते पक्के त्रिफलाऽर्धपलं क्षिपेत्।
आलोड्य गुळिकां कृत्वा युञ्ज्याद् गुल्मोदरादिषु ॥ ४८

॥ सामान्यविधिः ॥

त्वक्केसराम्रातकदाडिमैला
सितोपलामाक्षिकमातुलुङ्गैः।
मद्येन तैस्तैश्च मनोऽनुकूलै-
र्युक्तानि देयानि विरेचनानि ॥ ४९
बुद्धिप्रसादं बलमिन्द्रियाणां
धातुस्थिरत्वं ज्वलनस्य दीप्तिम्।
चिराच्च पाकं वयसः करोति
संशोधनं सम्यगुपास्यमानम् ॥ ५०

॥ वमनद्रव्याणि ॥

मदनमधुकलम्बानिम्बबिम्बीविशाला-
त्रपुसकुटजमूर्वादेवदाळीकृमिघ्नम्।
विदुळदहनचित्राः कोशवत्यौ करञ्जः
कणलवणवचैलासर्षपाश्छर्दनानि ॥ ५१

॥ विरेचनद्रव्याणि ॥

निकुम्भकुम्भत्रिफलागवाक्षी-
स्नुक्शङ्खिनीनीलिनितिल्वकानि ।
शम्याककम्पिल्लकहेमदुग्धा
दुग्धं च मूत्रं च विरेचनानि ॥ ५२

॥ मदनकल्पः ॥

फलानि [1]नातिपाण्डूनि न चातिहरितानि च ।
आदायाह्नि प्रशस्तर्क्षे मध्ये ग्रीष्मवसन्तयोः ॥ ५३
प्रमृज्य कुशमुत्तोल्यां क्षिप्त्वा बद्ध्वा प्रलेपयेत्
गोमयेनानु मुत्तोलीं धान्यमध्ये निधापयेत् ॥ ५४
मृदुभूतानि मध्विष्टगन्धानि कुशवेष्टनात् ।
निष्कृष्टानि गतेऽष्टाहे शोषयेत्तान्यथातपे ॥ ५५
तेषां ततः सुशुष्काणामुद्धृत्य फलापिप्पलीः ।
दधिमध्वाज्यपललैर्मृदित्वा शोषयेत् पुनः ॥
ततः सुगुप्तं संस्थाप्य कार्यकाले प्रयोजयेत् ॥ ५६

॥ नस्यकल्पः ॥

ऊर्ध्वजत्रुविकारेषु विशेषान्नस्यमिष्यते ।
विरेचनं बृंहणं च शमनं तत् त्रिधा स्मृतम् ॥ ५७
विरेचनं शिरःशूल[2]जाड्यस्यन्दगलामये ।
शोफगण्डक्रिमिग्रन्थिकुष्ठापस्मारपीनसे ॥ ५८
बृंहणं वातजे शूले सूर्यावर्ते स्वरक्षये ।
नासाऽऽस्यशोषे वाक्सङ्गे कृच्छ्रबोधेऽपबाहुके ॥ ५९

॥ नस्यभेदाः ॥

मर्शश्च प्रतिमर्शश्च द्विधा स्नेहोऽत्र मात्रया ।
कल्काद्यैरवपीडस्तु स तीक्ष्णैर्मूर्धरेचनः ।
ध्मानं विरेचनं चूर्णो युञ्ज्यात्तं मुखवायुना ॥ ६०

1. तानि 2. लौल्यस्तुन्दगदामयान्

षडङ्गुलद्विमुखया नाड्या भेषजगर्भया ।
स हि भूरितरं दोषं चूर्णत्वादपकर्षति ॥ ६१

॥ नस्यमात्राः ॥

प्रदेशिन्यङ्गुलीपर्वद्वयान्मग्नसमुद्धृतात् ।
यावत्पतत्यसौ बिन्दुर्दशाष्टौ षट् क्रमेण ते ॥ ६२
मर्शस्योत्कृष्टमध्योना मात्रास्ता एव तु क्रमात् ।
बिन्दुद्वयोनाः कल्कादेः

॥ नस्यानर्हाः ॥

योजयेन्न तु नावनम् ॥ ६३
तोयमद्यगरस्नेहपीतानां पातुमिच्छताम् ।
भुक्तभक्तशिरस्स्नातस्नातुकामस्रुतास्रुजाम् ॥ ६४
नवपीनसवेगार्तसूतिकाश्वासकासिनाम् ।
शुद्धानां दत्तबस्तीनां तथाऽनार्तवदुर्दिने ॥ ६५
अन्यत्रात्ययिकाद्व्याधेः

॥ नस्यकालः ॥

अथ नस्यं प्रयोजयेत् ।
प्रातः श्लेष्मणि मध्याह्ने पित्ते सायंनिशोश्चले ॥ ६६
स्वस्थवृत्ते तु पूर्वाह्णे शरत्कालवसन्तयोः ।
शीते मध्यन्दिने ग्रीष्मे सायं वर्षासु सातपे ॥ ६७
वाताभिभूते शिरसि हिध्मायामपतानके ।
मन्यास्तम्भे स्वरभ्रंशे सायंप्रातर्दिने दिने ॥ ६८

॥ क्रमोल्लङ्घने व्यापदः ॥

तत्र भुक्तभक्तस्य नस्येरितो दोषः ऊर्ध्वस्रोतांस्यावृत्य च्छर्दिश्वासकासप्रतिश्यायान् जनयेत् । स्नेहादिपीतपातुकामानामक्षिनासाऽऽस्यस्यन्दोपदेहतिमिरशिरोरोगान् । शिरःस्नातस्य शिरोऽक्षिकर्णशूलकण्ठरोगपीनसहनुमन्यास्तम्भार्दितशिरःकम्पान् । स्नातुकामस्य मूर्धरितमितत्वनिस्तोदजाड्यारुचि-

पीनसान्। स्रुतरक्तस्य क्षामतामरुचिमग्निसादं च। मूत्रितोच्चारितयोर्मूत्रशकृद्वेग-
धारणजान् विकारान्। अभिहतस्य तीव्रां रुजं। कृतवमनादीनां श्वास-
कासस्वरेन्द्रियहानिशिरोगौरवकण्डूकृमिदोषान्। गर्भिण्या भक्तद्वेषज्वरमूर्छा-
र्धावभेदकान्। अस्या अपत्यं च विकलेन्द्रियमुन्मादापस्मारयुक्तं वा। सूतिकायाः
स्रुतरक्तोक्तान् दोषान्। नवप्रतिश्यायस्य स्रोतोरोधाद् दुष्टप्रतिश्यायकेश-
शातकृमिकण्डूविचर्चिका जनयेत्। श्वासकासिनोर्व्याधिवृद्धिः। अकालदुर्दिने
सहसैव शैत्यात् शिरोरुग्वेपथुस्तैमित्यतालुनेत्रकण्डूपाकमन्यास्तम्भकण्ठरोग-
प्रतिश्यायारुंषिका जनयेदिति संग्रहे॥ ६९

तत्र भीतस्त्रीसुकुमारेषु स्नेहनस्यम्॥ ७०

॥ नस्यप्रयोगक्रमः॥

स्निग्धस्विन्नोत्तमाङ्गस्य प्राक्कृतावश्यकस्य च।
निवातशयनस्थस्य जत्रूर्ध्वं स्वेदयेत्पुनः॥ ७१
अथोत्तानर्जुदेहस्य पाणिपादे प्रसारिते।
किञ्चिदुन्नतपादस्य किंचिन्मूर्धनि नामिते॥ ७२
नासापुटं पिधायैकं पर्यायेण निषेचयेत्।
शनैरुच्छिङ्घ्य निष्ठीवेत्पार्श्वयोरुभयोस्ततः॥ ७३
आ भेषजक्षयादेवं द्विस्त्रिर्वा नस्यमाचरेत्।
मूर्छायां शीततोयेन सिञ्चेत्परिहरन् शिरः॥ ७४
एकान्तरं द्व्यन्तरं वा नस्यं दद्याद्विचक्षणः।
सप्ताहं तु परं देयं विश्रान्तस्य पुनः पुनः॥ ७५

॥ अणुतैलविधानभेदाः॥

मञ्जिष्ठामधुकप्रपुण्डरीकजीवकर्षभकाकोळीद्वयपयस्या।श।।रवा।ऽनन्तानी-
लोत्पलाञ्जनरास्नाविळङ्गतण्डुलमधुपर्णीश्रावणीमेदाकाकनासासरळभद्रदारुच-
न्दनैस्सुपिष्टैरष्टगुणं षड्गुणेन च पयसा तैलं विपचेत्॥ ७६

घृतं वा पित्तोल्बणेषु दोषेषु॥ ७७

अथ वा चन्दनागरुपत्रदार्वीत्वङ्मधुकबलैलाद्वयाबिल्वोत्पलकेसरप्रपौण्डरीकविळङ्गोशीरहिरिवेरवन्यत्वङ्मुस्ताशारिबाबृहतीद्वयजीवन्तीमेदादेवदारुसुरभिशतावरीः शतगुणे दिव्येऽम्भसि दशभागावशिष्टं काथयेत् । ततस्तस्य काथस्य दशमांशेन समांशतैलं दशकृत्वः साधयेत् । दशमे चात्र पाके तैलतुल्यमाजमपि पयो दद्यात् । एतदप्यपरमणुतैलं पूर्वस्माद्विशेषेणेन्द्रियदार्ढ्यकरं केश्यं त्वच्यं कण्ठ्यं प्रीणनं बृंहणं दोषत्रयघ्नं चेति संग्रहे ॥ ७८

अत्र प्रत्येकं समभागानां चन्दनादीनामौषधानां प्रमाणं प्रस्थम् । अस्यौषधप्रस्थस्य द्रव्याणि शतगुणे दिव्यतोयप्रस्थे निक्षिप्य यावद्दशभागावशेषस्तावदासप्ताहं विपचेत् । ततः परिस्राव्य तेषामेकांशेन समांशं तैलप्रस्थं समालोड्य दशावधि शनैर्दिने दिने प्रस्थं यावच्छेषं गतं तावद्विपाच्य दशमेऽहनि कषायसममाजक्षीरप्रस्थं संयोज्य तस्मिन् दशमे वासरे सम्यक्पक्वत्वाऽवतारयेदित्यर्थः ॥ ७९

यतः सप्ताहं वा दशाहं वा द्वादशाहमथ वा सर्वेषां मूलसाराणां बहुधा पाक इष्यते इति वचनात् ॥ ८०

तन्त्रान्तरे सप्ताहं सर्वमूलानां द्वादशाहं तु साराणामिति च वचनात् चन्दनाद्यौषधप्रस्थं, तस्य शतगुणेषु दिव्योदकशतप्रस्थेषु निक्षिप्या दशाहात् प्रतिदिनं दशप्रस्थं दशप्रस्थं शोषो यथा भवति तथा दशभागावशिष्टं पाकं कृत्वा दशमे दशमदिवसे पाके परिस्राव्य तस्मिन् पूते कषायदशप्रस्थे दशमभागकषायप्रस्थसमं तैलं तत्सममाजक्षीरप्रस्थं संयोज्य सम्यक्पाकेऽवतारयेत् ॥ ८१

काथ्यानां चन्दनागरुपत्रकदार्वीत्वग्यष्टिमधुकह्रस्वबलामूलभद्रैलातुटिबिल्वशिफानीलोत्पलकन्दपद्मकेसरप्रपौण्डरीकविळङ्गसारोशीरह्रीबेरभद्रमुस्तालवङ्गह्रस्वमुस्ताह्रस्वबृहतीमूलकण्टकारिमूलजीवन्तीमूलकलशीद्वयमूलदेवदारुवन्यतुलसीमूलशतावरीणां सप्तविंशत्यौषधानां प्रत्येकं द्वाविंशतिव्रीहिप्रमाणाधिकसप्तनिष्काणामेतेषामौषधानां द्वादशनिष्काधिकषोडशपलैः प्रपूरितचन्दनाद्यौषधप्रस्थस्य शतगुणेषु दिव्योदकशतप्रस्थेष्वेकचन्दनाद्यौषधप्रस्थं जर्जरीकृत्य

पृथुवत्सम्यक् संक्षुद्य निक्षिप्य सप्ताहाद्दशभागावशिष्टदशप्रस्थावशेषं क्वाथयित्वा ततो धाराचषकेण संशोध्य तस्य दशप्रस्थकषायस्य दशमभागसदृशं तिलतैल-प्रस्थं तेभ्यो दशप्रस्थकषायेभ्यः प्रस्थं प्रस्थं कषायमादाय तेन तैलप्रस्थेन सार्धं यावच्छेषं गतं तावत्पर्यन्तं पाकं कृत्वा एवं नवकृत्वस्तैलं साधयित्वा दशमे पाके तैले प्रस्थसममाजक्षीरं संयोज्य तस्मिन्नेवाहन्यनपेते सम्य-क्पाकेऽवतारयेत् । अन्यत्सुबोधम् ॥ ८२

सुरभी सल्लकी मोचा गजभक्ष्या महेरणा ।
सुरसा तुलसी कृष्णा चक्रपाणिसुमञ्जरी ॥ ८३
भूतप्रिया नागमाता सुरभिर्गन्धपत्रिका ।
कुटंनटं प्लवं वन्यं पेलवं परिपेलवम् ॥ ८४

अरेणुकाभावे जीवन्ती ॥ ८५

जीवन्तीजलदेवदारुजलदत्वक्सेव्यगोपीहिमं
दार्वीत्वङ्मधुक[1]प्लवागरुवरीपुण्ड्राह्वबिल्वोत्पलम् ।
धावन्यौ सुरभिं स्थिरे कृमिहरं पत्रं त्रुटिं रेणुकां
किञ्जल्कं कमलाद्बलां शतगुणे दिव्येऽम्भसि क्वाथयेत् ॥ ८६
तैलाद्रसं दशगुणं परिशोध्य तेन
तैलं पचेत्तु सलिलेन दशैव वारान् ।
पाके क्षिपेच्च दशमे समभाजदुग्धं
नस्यं महागुणमुशन्त्यणुतैलमेतत् ॥ ८७
भाण्डे स्रुते च निःस्नेहे लक्षयेदायुषः क्षयम् ।
नस्ये निषिक्तं तद्विद्यात्प्रतिमर्शप्रमाणतः ॥ ८८

तस्य प्रतिमर्शस्य पञ्चदश कालाः । तेषां गुणाः । *प्रातर्दन्ते भुक्तवतश्चान्ते स्रोतोविशुद्धिः शिरोलाघवं मनःप्रसादश्च भवति । विण्मूत्र शिरोऽभ्यङ्गाञ्जनकबळान्ते दृष्टिप्रसादः । दन्तधावनान्ते दन्तदृढता सौगन्ध्यं च । अध्वव्यायामव्यवायान्ते श्रमक्लमस्वेदस्तम्भनाशः । दिवास्वप्नान्ते निद्रा-

1. पल्लव
* अङ्कितोऽयं भागः हस्तलिखितपुस्तकस्थपरिशिष्टप्रकरण

शेषगौरवप्रणाशो मनःप्रसादश्च । अतिहसितान्तेऽनिलप्रशमः । छर्दितान्ते स्रोतोलीनश्लेष्मव्यपोहः । दिनान्ते स्रोतोविशुद्धिः सुखनिद्राप्रबोधश्च भवति॥८९

प्रमाणं प्रतिमर्शस्य बिन्दुद्वितयमिष्यते ।
बिन्दुर्वा येन चोत्क्लेशो नानुत्क्लिष्टस्य जायते ॥ ९०
निष्ठ्यूते यत्र वा स्नेहो न साक्षादुपलभ्यते ।

॥ प्रतिमर्शप्रशंसा ॥

न नस्यमूनसप्ताब्दे नातीताशीतिवत्सरे ॥ ९१
न चोनाष्टादशे धूमः कवलो नोनपञ्चमे ।
न शुद्धिरूनदशमे न चातिक्रान्तसप्ततौ ॥ ९२
आजन्ममरणं शस्तः प्रतिमर्शस्तु वस्तिवत् ।
तैलमेव तु नस्यार्थे नित्याभ्यासेन शस्यते ॥
शिरसः श्लेष्मधामत्वात् स्नेहाः स्वस्थस्य नेतरे ॥ ९३
प्रातर्मुदेवो भेषजे सति (?)

॥ इति विष्णुभट्टसुतपण्डितदामोदरविरचितायां आरोग्य-
चिन्तामणिसंहितायां क्रियाकल्पाधिकारः समाप्तः ॥

# ॥ अथ प्रत्यौषधपरिशिष्टम् ॥

[1]" लाङ्गलीकन्दस्य"

शुण्ठीमागधिमल्लिका घृतबलाहिङ्ग्वूत्तमं रोचना

यष्टिः कालशिफाऽऽम्रपुष्पमतिमुक्ताऽलर्क इक्षो रसः ।

क्षीरं चापि सितोष्णतोयसहितं चूर्णं तथा कीर्तितं

कृष्णासैन्धवकुष्ठजं प्रतिविषं शृङ्गी वरी वा बुधैः ॥ १

तिक्तालाबोः काञ्चिकं नालिकेरं

क्षौद्रं खारी जाम्बवत्वग्वरी च ।

कोलं चिञ्चा चन्दनं मृत्कपालं

मुस्ताखण्डं कुण्डली च प्रशस्तम् ॥ २

जीमूतके च जलचन्दनमृत्कपालं

खारी च शस्तमथ जाम्बववल्कलं च ।

जीमूतं तिक्तकोशातकी ॥ ३

वत्सनाभविषे शस्तं त्रिफलावारि शीतलम् ।

सूतस्यापह्युशीरं स्यात्सहदेवी च चन्दनम् ॥ ४

रजनी मेघनादश्च घृतेन सह टङ्कणम् ।

मनोह्वगन्धताळानां त्वापत्तौ शिंशपाशिफा ॥ ५

तैलं केरीपयः [2]काञ्ची सिता मृच्च हरीतकी ।

मनोह्वा मनःशिला ; ताळं हरिताळम् । केरीपयः नाळिकेरपयः ॥

1. " निशाभृङ्गमषी च तीक्ष्णं नारङ्गमम्लं खदिरस्य तोयम् ।
पौरं फलं कुण्डलितैलमिष्टं शङ्खस्य चूर्णं भिषजो वदन्ति ॥
शङ्खचूर्णं सुधा । माषिणिकी रम्भापुष्पम् । शाल्मली हिङ्गु । जम्बू दधिसारनवनीतम् । खारी गोळी । गोणी तिन्त्रिणीफलम् । रवेः शिफा अर्कमूलं । रात्रिचिञ्चाफला । भृङ्गभस्म । तीक्ष्णमरीच । कुण्डली । कपित्ताम्लं वारणं काञ्चिके स्यात् । खरीपयोदं नवमृत्कपालं स्याद्देहदाल्या पठिता च जम्बूः ॥" अस्फुटार्थोऽयं भागः

2. पृश्निपर्णीत्यर्थः

[1]स्पृक्कायां घृतपानमुक्तमथवा काकाण्डकन्दं पिबेत् ॥ ६

अङ्कोलभागैस्त्रिभिरेकमाज्यं
निशाऽऽकुली मेघरवं गुळाब्जे ॥
क्षीरं तथैरण्डभवं च तैलं
धत्तूरके स्यान्मधुकैर्विमिश्रं ।
मदोद्भवे कोद्रवजे तु तक्रं
भिषग्भिरुक्तं पृथुके पटु स्यात् ॥ ८

पटु सैन्धवम् ॥

घृतस्य पानं कृसरे प्रदिष्टं
खारी च मातृप्रभवे विकारे ।
तथैव खारी विदळेषु शस्ता
शिका[2] हिता मोदकजे विकारे ॥ ९

॥ इति प्रत्यौषधपरिशिष्टं समाप्तम् ॥

1. श्लोकस्यास्य पादत्रयं नोपलभ्यते । 2. शतपुष्पेत्यर्थः

# ॥ अथ भेषजकल्पपरिशिष्टम् ॥

दुग्धे तक्रे च धान्याम्ले कल्कं स्वरसवद्भवेत् ।
तेषु स्वरसवत् स्नेहं त्रिरात्रात्संप्रपीडयेत् ॥ १
निमेषोन्मेषणं मात्रा स्फोटनं वा तथाऽङ्गुलेः ।
अक्षरस्य लघोर्वाऽपि मात्रा तूच्चारणं भवेत् ॥ २
लाजान् माषकुलत्थमुद्गलशुनं शुण्ठीयवौ क्राथयेत्
सद्यस्त्वेव कषायपाकविधिवत्स्नेहेन संयोजयेत् ।
कुर्यात्पीडनमेकरात्रपरतः; सौवीरतक्रान्विते
स्नेहे मस्तुपयोरसैश्च सहिते द्वाभ्यां दिनाभ्यां परम् ॥ ३
पञ्चषड्दिवसक्राथाद् द्रव्यं वीर्यं विमुञ्चति ।
कल्कैरेव युतं स्नेहं पीडयेत्पञ्चभिर्दिनैः ॥ ४
द्वादशाहं तु साराणां सर्वेषां पाक इष्यते ।
सप्ताहं सर्वमूलानां वल्लीनां त्र्याहिकं स्मृतम् ॥ ५
धान्यानां शाकजातीनामेकाहं पाक इष्यते ।
सद्यःकषायैः साध्यांस्तु द्वितीयेऽहनि पीडयेत् ॥ ६
साध्याः स्नेहास्त्र्यहे तक्रे सारमस्तुरसाम्बुभिः ।
मूत्राद्यैः क्षीरवत्पाकः सुराऽऽद्यैः काञ्जिकेष्विव ॥ ७
सद्यःकषायपाकाख्या यवाग्वास्थापनादयः ।
धान्यानि मांसलशुनलाजशुण्ठीफलानि च ॥ ८
पत्रपुष्पामकन्दादींस्तदहः साधयेन्मृदून् ।
मांसं तु द्विगुणं स्नेहाद्योगे त्वन्यकषायतः ॥ ९
समं चतुर्गुणं त्वम्बु मांसात्कुर्याद्भिषग्वरः ।
स्नेहपाके तु मांसस्य तोयं दद्याच्चतुर्गुणम् ॥
मांसं स्नेहाद् द्विगुणितं क्राथ्यं पादावशेषितम् ॥ १०

"संसिच्य लाक्षां सलिले समांसे
दिनोषितं तत्कतिचित्प्रयुञ्ज्यः ।
चतुर्गुणे पारसितान्निदाय
केचिच्चतुर्थं परिपक्वमम्भः ॥" (?)
काथो वल्लीशिफासारैस्त्रिसप्ताष्टदिनैः क्रमात् ।
त्वग्भिरेवं तथाऽऽर्द्राभिः पञ्चाहं परमावधिः ॥
खारीमस्तुपयोमूत्रमध्वाज्यैः पाककर्म च ॥

॥ इति भेषजकल्पपरिशिष्टं समाप्तम् ॥

# ॥ अथ क्रियाकल्पपारिशिष्टम् ॥

## [1]॥ अथ गण्डूषः ॥

चतुर्विधो भवति गण्डूषः । स्नेहनः शमनः शोधनो रोपणश्च । तेषामाद्यास्त्रयः क्रमेण वातपित्तकफामये स्युः । रोपणस्त्वास्यव्रणघ्नः । शमनः स्तम्भनः प्रसादनो निर्वापण इति पर्यायाः ॥ १

तत्र स्वाद्वम्ललवणोष्णैरौषधैः सिद्धो युक्तो वा नात्युष्णः स्नेहो मांसरसस्तिलकल्कोदकं क्षीरं वा स्नैहिकः ॥ २

---

1. " प्रातदत्ते भुक्तवतश्चान्ते स्रोतोविशुद्धिः शिरोलाघवं मनःप्रसादश्च भवति । विण्मूत्रशिरोऽभ्यङ्गाञ्जनकवलान्ते दृष्टिप्रसादः । दन्तधावनान्ते दन्तदृढता सौगन्ध्यं च । अध्वव्यवायव्यायामान्ते श्रमक्लमस्वेदस्तम्भनाशः । दिवास्वप्नान्ते निद्राशेषगौरवप्रणाशो मनःप्रसादश्च भवति । अतिहसितान्ते अनिलप्रशमः । छर्दितान्ते स्रोतोवि(ली)नश्लेष्मव्यपोहः ।

दिनान्ते स्रोतोविशुद्धिः सुखनिद्राप्रबोधश्च ।
प्रमाणं प्रतिमर्शश्च(स्य) बिन्दुद्वितयमिष्यते ॥
बिन्दुर्वा येन चोत्क्लेशो नानुक्लिष्टस्य जायते ।
निष्ठ्यूते यत्र वा स्नेहो न साक्षादुपलभ्यते ॥
न नस्यमूनसप्ताब्दे नातीताशीतिवत्सरे ।
न चानाष्टादशे धूमः कवलो नोनपञ्चमे ॥
न शुद्धिरूनदशमे न चातिक्रान्तसप्ततौ ।
आजन्ममरणं शस्तः प्रतिमर्शस्तु वस्तिवत् ॥
तैलमेव तु नस्यार्थे नित्याभ्यासेन शस्यते ।
शिरसः श्लेष्मधामत्वात् स्नेहाः स्वस्थस्य नेतरे ॥

॥ इति नस्यविधिः ॥"

अयं भागः क्रियाकल्पाधिकारे प्रदर्शितः ॥

पटोलारिष्टजम्ब्वाम्रमालतीपल्लवोत्पलमधूकक्वाथसितोदकक्षौद्रक्षीरेक्षुरसघृतादिभिः शमनः ॥ ३

कट्वम्ललवणोष्णैः शिरो[1]विरेचनद्रव्यैः शुक्तमद्यधान्याम्लमूत्रान्यतमकल्कितालोळितैः शोधनः ॥ ४

रोपणस्तु कषायमधुरशीतलैर्यथास्वं चोपदिष्टैः ।

॥ तिलकल्कगण्डूषणम् ॥

[2]दन्तदहर्षे दन्तचाले मुखरोगे च वातिके ॥ ५
सुखोष्णमथ शीतं वा तिलकल्कोदकं हितम् ।

॥ नित्यगण्डूषहितम् ॥

गण्डूषधारणे नित्यं तैलं मांसरसोऽथ वा ॥ ६

॥ घृतगण्डूषः ॥

ऊषादाहान्विते पाके क्षते चागन्तुसंभवे ।
विषे क्षाराग्निदग्धे च सर्पिर्धार्यं पयोऽथ वा ॥ ७

॥ मधुगण्डूषः ॥

वैशद्यं जनयत्यास्ये सन्दधाति [3]मुखव्रणान् ।
दाहतृष्णाप्रशमनं मधुगण्डूषधारणम् ॥

॥ धान्याम्लगण्डूषः ॥

धान्याम्लमास्यवैरस्यमलदौर्गन्ध्यनाशनम् ।
तदेवालवणं शीतं मुख[4]शोषहरं परम् ॥ ९

॥ क्षाराम्बुगण्डूषः ॥

आशु क्षाराम्बुगण्डूषो भिनत्ति श्लेष्मणश्चयम् ।

॥ खदिरादिकषायगण्डूषः ॥

खदिरक्षीरवृक्षारिमेदाम्बुकबलग्रहः ॥ १०

3. मद्र
4. दोष

अरोचकास्यवैरस्यमलपूति[3]व्रणस्य तत् ।

॥ केवलोष्णोदकगण्डूषः ॥

सुखोष्णोदकगण्डूषैर्जायते वक्त्रलाघवम् ॥ ११

॥ मातुलुङ्गफलकेसरादिगण्डूषः ॥

केसरं मातुलुङ्गस्य सव्योषक्षौद्रसैन्धवम् ।
प्रातः प्रातश्च कवलात्कासारुचिविनाशनम् ॥
स्वरसादक्षयच्छर्दिविहितं च शिरोरुजि ॥ १२
वृक्षाम्लजीरककटुत्रयसैन्धवानां
चूर्णं त्रिजातमरुचौ कवळं मधूढम् ।
एलालवङ्गदळजीरकशर्कराभि-
र्धान्याम्लमेव वितरेत्सततं सुखाय ॥ १३

॥ मातुलुङ्गगण्डूषः ॥

केसरं मातुलुङ्गस्य पलं मधु पलं भवेत् ।
कर्षांशं शर्कराव्योषसैन्धवं धारयेद् बुधः ॥ १४
गण्डूषणमिदं प्रोक्तं श्लेष्ममातङ्गकेसरी ।

॥ गण्डूषविधानम् ॥

निवाते सातपे स्विन्नमृदितस्कन्धकन्धरः ॥ १५
गण्डूषमपिबन् किञ्चिदुन्नतास्यो विधारयेत् ।
कफपूर्णास्यता यावत्स्रवद्घ्राणाक्षताऽथ वा ॥ १६
असंचार्यो मुखे पूर्णे गण्डूषः
कबलोऽन्यथा ।
मन्याशिरःकण्ठमुखाक्षिरोगाः
प्रसेककण्ठामयवक्त्रशोषाः ।
हृल्लासतन्द्राऽरुचिपीनसाश्च
साध्या विशेषात्कबलग्रहेण ॥ १७

1. प्रशस्य

प्रतीसारणमपि त्रिविधम् ।
वातेऽम्लं शर्करा पित्ते कफे कटु च माक्षिकम् ॥ १८
यथोल्बणं क्रमात्कुर्यात्सर्वेषां सैन्धवं समम् ।
गण्डूषद्रव्ययोगेन विधिरेष प्रदर्शितः ॥ १९

॥ इति गण्डूषविधिः ॥

## ॥ अथ मूर्धतैलाधिकारः ॥

अभ्यङ्गसेकपिचवो बस्तिश्चेति चतुर्विधम् ।
मूर्धतैलं बहुगुणं तद्विद्यादुत्तरोत्तरम् ॥ २०
अभ्यङ्गो वातहा पुष्टिस्वप्नदार्ढ्यबृहत्त्वकृत् ।
दग्धभग्नक्षतरुजाश्रमक्लमजरापहः ॥ २१
अरूंषिकाशिरस्तोददाहपाकव्रणेषु तु ।
परिषेकः, पिचुः केशशातस्फुटनधूपने ॥ २२
नेत्रस्तम्भे च, बस्तिस्तु प्रसुप्त्यर्दितजागरे ।
नासाऽऽस्यशोषे तिमिरे शिरोरोगे च दारुणे ॥ २३

॥ इति मूर्धतैलम् ॥

॥ इति क्रियाकल्पपरिशिष्टं समाप्तम् ॥

# ॥ अथ कषायपरिशिष्टम् ॥

## ॥ ज्वरेषु ॥

घनचन्दनशुण्ठ्यम्बुपर्पटोशीरसाधितम् ।
[1]शीतं [2]तेभ्यो हितं तोयं पाचनं तृड्[3]ज्वरापहम् ॥ १
मुस्तायाः पर्पटस्यैव शुण्ठ्या दुःस्पर्शकस्य वा ।
पाक्यं शीतकषायं वा पाठोशीरं सवालकम् ॥ २
पिबेत ; तद्वच्च भूनिम्बगुळूचीमुस्तनागरम् ।
यथायोगमिमे योज्यास्तथैवं दोषपाचनाः ॥
ज्वरारोचकतृष्णाऽऽस्यवैरस्यापक्तिनाशनाः ॥ ३

पाचनममृता पाठो-
शीरोदीच्याब्दभूनिम्बैः ।
धनपर्पटकैर्दुःस्पृक्-
पर्पटविश्वैरपि श्रृतं क्रमशः ॥ ४
कायाग्निमान्द्यं ज्वरमृत्युजीर्णं
सतृष्णदाहं रसजीर्णनाशम् ॥ (?) ५

## ॥ वातज्वरे ॥

दुरालभाऽमृता मुस्ता नागरं वातजे ज्वरे ।
अथ वा पिप्पलीमूलं गुळूची विश्वभेषजम् ॥ ६
कनिष्ठपञ्चमूलं च वातिकज्वरनाशनम् ।
दुरालभाऽमृतामुस्तावलाधान्यकनागरैः ॥ ७
काथो वातज्वरं हन्यादशनिर्भुजगं यथा ।
[4]विश्वामृताकणामूलैः काथो वातज्वरापहः ॥ ८

---

1. श्रृतं
2. उद्रिक्तपित्तेभ्यः इत्यर्थः
3. जरा
4. शुण्ठ्या

सुरतरुबिल्वपुनर्नव-
घृतदुग्धं विश्वशोम्भमिव (?) ।
अमृताबिल्वमूलाब्दबलाधान्यकनागरैः ।
कषायो मातरिश्वोत्थज्वरं हन्याद्विशेषतः ॥ ९
दुरालभाऽमृतामुस्ताबलाबिल्वमहौषधैः ।
सपर्पटकधान्याकैः काथो वातज्वरापहः ॥ १०
छिन्नोद्भवाऽम्बुधरधन्वयवासविश्वै-
र्दुस्पर्शपर्पटकमेघकिराततिक्तैः ।
मुस्ताटरूषकमहौषधधन्वयासैः
काथं पिबेदनिलपित्तकफज्वरेषु ॥ ११

॥ पित्तज्वरे ॥

अमृताऽऽमलकाभ्यां वा काथः पित्तज्वरापहः ।
अमृताचन्दनोशीरशारिबाऽम्बुदवारिभिः ॥ १२
काथः पित्तज्वरं हन्यात् [1]सितया मधुना युतः ।
मुस्तोत्पलामृताद्राक्षाशारिबाकणचन्दनैः ॥ १३
सपटोलैः शृतं तोयं पीतं पित्तज्वरं जयेत् ।
चन्दनं शारिबोशीरमिक्षुखण्डं शतावरी ॥ १४
मुद्गान् विपाचयेत् पेयं सुशीतं पैत्तिके ज्वरे ।
राजवृक्षश्च मृद्वीका पाठा कटुकरोहिणी ॥
कषायो मधुसंयुक्तः पैत्तिकज्वरनाशनः ॥ १५
द्राक्षाऽमृतापर्पटकाब्दतिक्तैः
काथं सशम्याकफलं विदध्यात् ।
प्रलापमूर्छाभ्रमदाहशोष-
तृष्णाऽन्विते पित्तभवज्वरे च ॥ १६
बालमध्यमवृद्धानामेकैव कटुरोहिणी ।
ज्वराणामानुलोम्ये च [2]सितया पाचनी हिता ॥ १७

---

1. शीतया 2. शीतया

एकाऽपि योज्या कटुका नराणां
ज्वरे मरुत्पित्तकफोद्भवे च ।
रास्नासिताविश्वयुता क्रमेण
सा कल्किता वा कथिताऽथ वाऽपि ॥ १८

॥ कफज्वरे ॥

अथ वा वृषगाङ्गेयशृङ्गवेरदुरालभाः ।
व्याघ्रीदुरालभाभार्ङ्गीशुण्ठीच्छिन्नरुहाऽम्बुदैः ॥ १९
क्वाथः कफज्वरं हन्यात् पिप्पलीचूर्णसंयुतः ।
शुण्ठी वासाऽब्दधान्याकं पाठा कटुकरोहिणी ॥ २०
कषायो मधुसंयुक्तः श्लेष्मकज्वरनाशनः ।
शुण्ठीदुरालभाभार्ङ्गीवासात्रिदशदारुभिः ॥
शम्याकत्रिफलायुक्तः क्वाथः श्लेष्मज्वरापहः । २१
वृषघनदुस्पृक्शुण्ठी-
क्वाथः श्लेष्मज्वरं निवर्तयति ।
कणमधुयुक्तः पीतः
क्वाथश्छिन्नोद्भवस्यैव ॥ २२
वत्सकमूर्वा भार्ङ्गी
कटुका मरिचं [1]घुणप्रिया च गण्डीरम् ।
एलापाठाऽजाजी-
कट्वङ्गफलाजमोदासिद्धार्थवचाः ॥ २३
जीरकहिङ्गुविळङ्गं
पशुगन्धा पञ्चकोलकं हन्ति ।
चलकफमेदःपीनस-
गुल्मज्वरशूलदुर्नाम्नः ॥ २४

॥ द्राक्षादिकषायः ॥

द्राक्षामधूकमधुकलोध्रकाश्मर्यशारिवाः ।
मुस्तामलकह्रीबेरपद्मकेसरपद्मकम ॥ २५

---

1. भ्रयण

मृणालचन्दनोशीरनीलोत्पलपरूषकम् ।
[1]फाण्टो हिमो वा द्राक्षादिर्जातीकुसुमवासितः ॥ २६
[2]युक्तो मधुसितालाजैर्जयत्यनिलपित्तजम् ।
[3]ज्वरं मदात्ययं छर्दिं मूर्छां दाहं श्रमं भ्रमम् ॥
ऊर्ध्वगं रक्तपित्तं च पिपासां कामलामपि ॥ २७

॥ सन्निपातज्वरे ॥

बदरीपल्लवक्काथो जीर्णज्वरमपोहति ।
पिप्पलीचूर्णसंयुक्तो विशेषात्सान्निपातिकम् ॥ २८

॥ ज्वरातिसारे ॥

दुरालभातोयदविश्वभेषजै-
र्ज्वरातिसारे शृतमम्बु शस्तम् ।
तथैव पाठाऽतिविषाऽम्बुशुण्ठी-
दुरालभावालुकपर्पटैश्च ॥ २९
नागरातिविषामुस्ताभूनिम्बेन्द्रयवामृताः ।
सर्वज्वरहरो योगः सर्वातीसारनाशनः ॥ ३०
पाठेन्द्रयवभूनिम्बमुस्तापर्पटकामृताः ।
जयन्त्याममतीसारं ज्वरं च समहौषधाः ॥ ३१
मुस्ता कुष्ठं हरिद्रे द्वे पिप्पली देवदारु च ।
शुण्ठी च पिप्पलीमूलमुस्तारिष्ट[4]वचाऽन्विताः ॥ ३२
सर्वज्वरहरो योगः सर्वातीसारनाशनः ।
अरल्वातिविषामुस्ताबिल्वदाडिमनागरैः ॥
सर्वज्वरहरः क्काथः सर्वातीसारनाशनः ॥ ३३

---

1. पाला
2. अम्बूलिका
3. मन्दाग्निछर्दि पूर्छा दाहभ्रम ।
4. वगन्तिकः ।

## ॥ रक्तपित्ते ॥

चन्दनवालुकपर्पट-
वलाहकोशीरसंभृतः क्राथः ।
परिहरति रक्तपित्तं
क्लेशमिवेशे नमस्कारः ॥ ३४

जलचन्दनाबिल्वाब्दपर्पटोशीरसाधितः ।
रक्तपित्तं निहन्त्याशु ह्यूर्ध्वगं चाप्यधोगतम् ॥ ३५

त्रिवृद्‌द्राक्षाभयाधात्रीसिद्धं जलमपोहति ।
शर्करामधुसंयुक्तमूर्ध्वगं रक्तपित्तकम् ॥ ३६

शर्करामधुसंयुक्तः केवलो वा शृतोऽपि वा ।
वृषः सद्यो जयत्यस्रं कासस्य परमौषधम् ॥ ३७

विश्वच्छिन्नरुहा[1]क्वाथः सकृष्णः सासितस्तु यः ।
शोणितोद्गारहृत्कासक्षयघ्नो ज्वरहृत्परम् ॥ ३८

तृणाख्यपञ्चमूलानां वटवेतसयोरपि ।
क्वाथे शीते कृते पीते रक्तपित्तं न कुप्यति ॥ ३९

तृणाख्यं शर[2]दर्भेक्षुशालिकाशैश्च पित्तजित् ।
दुरालभायाः क्वाथस्तु रक्तपित्तविनाशनः ॥ ४०

शारिवाऽब्दशतावर्यो यष्टीमधुकमृद्धिकाः ।
सिताक्षौद्रयुतः क्वाथो रक्तपित्तमपोहति ॥ ४१

## ॥ श्वासकासे ॥

तामलक्यभयाभार्ङ्गीकैडर्यकणनागरैः ।
शालकैः सिंहिक्षुद्राह्ववृषमूलैः शृतं जलम् ॥ ४२

पीनसश्वासकासं च क्षयशूलमरोचकम् ।
वह्निमान्द्यं विशेषेण नाशयेत्तु न संशयः ॥ ४३

कुण्डलीमूलमरिचपथ्यासिद्धजलं पिबेत् ।
पञ्चकासाग्नि[3]सदनश्वासहृल्लासपीडितः ॥ ४४

---

1. भूत	2. दखक्षु	3. पदन

व्योषतामलकीभार्ङ्गीव्याघ्रीभिः क्वथितं जलम् ।
कासानशेषानचिरात् पीतमाशु व्यपोहति ॥ ४५
व्योषाग्निचविकाक्वाथो भार्ङ्गीक्वाथः समाक्षिकः ।
स्वरसादाग्निसदनश्वासकासनिबर्हणः ॥ ४६
व्योषाग्निचविकाक्वाथः सिन्धुचूर्णसमन्वितः ।
शोषशूलग्रहण्यामजाग्निमान्द्यमरोचकम् ॥ ४७
पीनसं श्वासकासं च नाशयेत्तु न संशयः ।
तामलक्यभयाकृष्णाचविकानागरैः श्रृतम् ॥ ४८
तोयं पीनसदुर्नामशोषशूलाग्निमान्द्यजित् ।
शृङ्गीभार्ङ्ग्यमृताव्याघ्रीपाठापथ्यावृषैः कृतः ॥ ४९
क्वाथः काण्टकषायश्च श्वासकासनिबर्हणः ।
पुष्कराकुण्डलिव्यब्दक्षुद्रानागर[1] रेचकैः ॥
क्वाथः कासज्वरश्वासहरो दीपनपाचनः ॥ ५०
क्वाथो हन्ति समाक्षिको गजकणा शुण्ठी च भार्ङ्गी तथा
कासघ्नी च निदिग्धिकाऽमृतलता विश्वं शतावर्यपि ।
मूर्वा चार्कसुगन्धिमूलरजनीपाठोषणं पिप्पली
वत्सानां श्वसनाग्निमान्द्यकसनारुच्यामदोषक्षये ॥ ५१
मूलं तु [2]वृश्चिकालीनां भार्ङ्गी नागरमेव च ।
एतैः कषायं प्रपिबेत् कासे सैन्धवसंयुतम् ॥ ५२
पाठासपिप्पलीभार्ङ्गीनागकेसरविश्वजः ।
कषायः क्षौद्रसंयुक्तः श्वासकासं व्यपोहति ॥ ५३
मरिचालर्ककासघ्नीवृश्चिकालीनिदिग्धिकाः ।
कषायः पिप्पलीयुक्तः श्वासकासनिबर्हणः ॥ ५४
तिन्त्रिणीतरुणपर्णपलाशैः
सिद्धमम्बु कणरेणुविमिश्रम् ।
कासमाशु विनिहन्ति नराणां
[3]त्र्यूषणैरथ समन्वितमेतत् ॥ ५५

1. रेवकी 2. वत्सक

पाठाव्याघ्रयमृतायासनागरैः क्वथितं जलम् ।
कणाभार्ङ्गीप्रतीवापं कासश्वासनिबर्हणम् ॥ ५६

मरिचभृङ्गमहौषधकुण्डली-
श्वसनहा वृषवृश्चिकभार्ङ्ग्यपि ।
क्वथितमम्बु कणारजसाऽन्वितं
कफमरुद्भवकासहरं क्षणात् ॥ ५७

भार्ङ्गीकणाकासहरीहरिद्रा-
व्योषामृतानागरधान्यकानाम् ।
[1]क्वाथो जयेच्छ्वासमतिप्रवृद्धं
क्षणेन तीक्ष्णोत्थपरागमिश्रः ॥ ५८

रजनीनागरोद्भूतक्वाथः कृष्णारजोऽन्वितः ।
प्रतिश्यायारुचिश्वासं मान्द्यं त्वग्निकृतं जयेत् ॥ ५९

लशुनं कुण्डली पत्रं वचा शुण्ठी च सैन्धवम् ।
सुखोष्णं क्वथितं पेयं श्वासकासनिबर्हणम् ॥ ६०

द्राक्षाऽऽमलकपुनर्नव-
वृश्चीवदुरालभाऽभयाकृष्णाः
कासं घ्नन्ति च शुण्ठी
तामलकी कण्टकारी च ॥ ६१

नागरं वृश्चिकाली च भार्ङ्गी चैभिः शृतं जलम् ।
पिप्पलीचूर्णसंयुक्तं श्वासे कासे पिबेत्तु [2]तत् ॥ ६२

निदिग्धिकाऽमृताशुण्ठीपुष्कराह्वैः शृतं जलम् ।
श्वासकासारुचिहरं कफवातज्वरापहम् ॥ ६३

कृष्णाऽम्लवेतसशटी-
तामलकीसुरसहिङ्गुजीवन्त्यः ।
युक्ताः पुष्करमूलै-
र्वर्गोऽयं श्वासकासशमनाय ॥ ६४

---

1. क्वाथो निहन्ति पुनराढ्यतरः कणानां
चूर्णैः प्रवृद्धकसनं श्वसतं च हिक्काम् ।

2. याम्

शुण्ठ्यमृतावृषभार्ङ्गी-
पाठाबिल्वाब्दपञ्चकोलगदैः ।
बृहतीस्थिराश्वदंष्ट्रा-
द्वितयैः कासं [1]जयेच्चिरजम् ॥ ६५

देवद्रुवृश्चिकाली-
मूलयुतः क्षौद्रसंयुतः क्वाथः ।
वैस्वर्यज्वरकास-
श्वासानान्तरक्षणाज्जयदः ॥ ६६

दशमूलस्य वा क्वाथमथ वा देवदारुणः ।
दशमूलशटीभार्ङ्गी[2]लाजबिल्वाब्दपौष्करैः ॥ ६७
कुळीरशृङ्गीचपलतामलक्यमृतोषणैः ।
पिबेत्कषायं जीर्णेऽस्मिन् पेयां तैरेव साधिताम् ॥ ६८

## ॥ हिक्कायाम् ॥

दशमूलाविश्वलशुन-
निष्क्वाथः क्षीरपरिशिष्टः ।
पीतो भिनत्ति हिक्कां
लज्जामिव वेगवान् रागः ॥ ६९

छिन्नां च नीलिनीं शुण्ठीं पटे स्रुत्वा रसं पिबेत् ।
सैन्धवोरुबुतैलाढ्यं तेन हिक्का निवर्तते ॥ ७०
शुण्ठीलशुननिर्यूहं हिङ्गुसैन्धवचूर्णितम् ।
हिक्काश्वासप्रतिश्यायशूलवातामयी पिबेत् ॥ ७१

बृहतीद्वयवृश्चाह्वा-
पुष्करमूलाभयाशुण्ठ्यः ।
हिक्कां गृह्णन्ति शटी
दुरालभा बदरबीजं च ॥ ७२

---

1. क्षिद्विरजः । 2. राज

## ॥ यक्ष्मरोगे ॥

निदिग्धिका कणा शुण्ठी भार्ङ्गी कासहरी [1]वरी ।
क्वाथोऽयमेतैर्मध्वाढ्यः क्षयघ्नः स्वरकृत्परम् ॥ ७३
आर्द्रकोषणकासघ्नक्वाथो हन्ति मधूत्कटः ।
क्षयं क्षयकृतं शोषवैस्वर्यं चाग्निमन्दताम् ॥ ७४
चव्याश्रृङ्गीबलाह्वाऽमरतरबृहतीकुष्ठविश्वामृतानां
वासाभार्ङ्गीश्वदंष्ट्राद्वयमरिचकणामूलपाठाऽनलानाम् ।
सव्याघ्रीकासमर्दो गजकणरजनीवृश्चिकालिस्थिराणां
क्वाथः कृष्णामधुभ्यां श्वसनकसनवैस्वर्ययक्ष्मापहारी ॥ ७५
चव्येन तामलक्या वा द्वाभ्यां वा सह साधितम् ।
[2]पीत्वौषधं क्षपयति शोषं शोफामयं तथा ॥ ७६
[3]रम्भापुष्पकनिर्यूहं व्योषचूर्णाविलं पिबेत् ।
कफातिसारग्रहणीभक्ताच्छन्दवशानुगः ॥ ७७
अरुचिमनलमान्द्यं पीनसश्वासकासा-
नुदरविषमदोषानाशु हन्यादशेषान् ।
जनयति तनुकान्तिं चित्तनेत्रप्रसादं
पलपरिमितनिस्त्वक्शुद्धशुण्ठीकषायः ॥ ७८
चविकापिप्पलीमूलमरिचौषधजीरकैः ।
साबिल्वैः क्वथितं वारि भक्तद्वेषनिवारणम् ॥ ७९
व्योषं फलत्रयं चापि चित्रकं कालजीरकम् ।
चविका पिप्पलीमूलं श्रृङ्गी भार्ङ्गी जटा बला ॥ ८०
गुळूची पौष्करं मूलं सिंही दारुनिशा शटी ।
कोरण्डमजमोदा च यवानी सैन्धवं तथा ॥ ८१
बिल्वं च शरपुङ्खं च क्वाथ एतैस्त्रिदोषजित् ।
वैस्वर्यके विशेषेण गायकानां प्रशस्यते ॥ ८२

---

1. बटी  2. विश्व  3. रम्यानिजीर्ण

कैडर्यभार्ङ्गीकणकण्टकारि-
क्षुद्राऽभयानागरकासमर्दैः ।
सक्षौद्रमम्भः स्वरसादकास-
श्वासेषु शस्तं बलपुष्टिदं च ॥ ८३

(हंसपादिबृहतीद्वयमूर्द्धी
काशारिबेक्षुमूलानि कैडर्य-
मधुकृष्णासविदार्यकुरण्टजननानि ॥) (?) ८४

## ॥ छर्द्याम् ॥

अब्दाम्रपल्लवोशीरवटशुङ्गावरोहजः ।
क्वाथः क्षौद्रयुतः शीतः शीतो वा विनियच्छति ।
छर्दिं ज्वरमतीसारं मूर्छां तृष्णां च दुर्जयाम् ॥
बिल्वधान्यकबलामहौषधै-
र्लाजमुद्गमिहितैः शृतं जलम् ।
छर्दिमाशु पिबतः सशर्करं
हन्ति वातकफपित्तजामपि ॥ ८६
लाजमहौषधबिल्वै-
रम्बु शृतं कोष्णमपहरति ।
कफपित्तपवनजातं
छर्दिं समुदायजातं च ॥ ८७
बिल्वस्य मूलनिकाथः सलाजमधुशर्करः ।
पीयमानः शमयति छर्द्यतीसारकज्वरम् ॥ ८८

## ॥ हृद्रोगे ॥

दशमूलकषायस्तु सतैललवणान्वितः ।
[illegible] हृद्रोगं लाक्षायुक्तं [1]तथा पयः ॥ ८९

---
1. यथा

एरण्डबिल्वबृहतीद्वयमातुलुङ्ग-
पाषाणभित्त्रिकटुमूलकृतः कषायः ।
सक्षारहिङ्गुलवणो रुबुतैलमिश्रः
श्रोण्यूरुमेढ्रहृदयस्तनरुक्षु पेयः ॥ ९०

लशुनपुनर्नवशुण्ठी-
माषकुलत्थोत्थितः क्वाथः ।
सैन्धवतैल[1]सनाथो
हृद्रोगो[2]रःक्षतत्राता ॥ ९१

॥ तृष्णायाम् ॥

जम्ब्वाम्रशुङ्गमधुकैः शृतशीतमम्भः
क्षौद्रेण पीतमपहन्ति नृणां पिपासाम् ।
न्यस्ता तथैव गुलिका वटशुङ्गशाली-
लाजोत्पलैः समदृढाविकतैकतास्ये (?) ॥ ९२

चन्दनोशीरकिञ्जल्कमृणालानि शतावरी ।
वटजातिविषा मुस्ता चैभिः क्वाथः पिपासहा ॥ ९३

नागरधन्वयवासक-
[3]दाडिमपर्पटकचन्दनाजाज्यः ।
भूनिम्बघनपटोली-
कुस्तुम्बर्यस्तृषं घ्नन्ति ॥ ९४

मृद्वीकामधुकमधूकपिप्पलीभिः
खर्जूरैर्मलयजशारिबाजलाब्दैः ।
सोशीरैः शृतमथ वा सुशीतमम्भ-
स्तृणमूर्छा [illegible] ॥ ९५

1. सनादो 2. रक्षतां त्रातः 3. नागर

## ॥ अर्शांसि ॥

चिरिबिल्वबिल्वशुण्ठी-
चित्रकसुरदारुभिः शृतः कषायोऽयम् ।
ज्वलयति वह्निं सन्नं
गुल्मग्रहणीप्लिहार्शसां हन्ता ॥ ९६

चिरिबिल्वपुनर्नववह्न्यभया-
कणनागरसैन्धवपक्वजलम् ।
गुदकीलभगन्दरगुल्महरं
जठराग्निविवर्धनमाशु नृणाम् ॥ ९७

पथ्योषणाळिङ्गाग्नियवानीविश्वभेषजैः ।
कषायः शूलदुर्नामविबन्धाध्मानसूदनः ॥ ९८

पूतिकापिप्पलीशुण्ठीजयाधान्यकचित्रकैः ।
निर्यूहस्सयवक्षारो विबन्धार्श प्रणाशनः ॥ ९९

चव्यचित्रकसिद्धोऽयं कषायः सैन्धवान्वितः ।
गुदामयान्निहन्त्याशु जनयत्युदरानलम् ॥ १००

दुरालभानागरबिल्वपथ्या-
कणाग्निभिः कल्कितमम्बु पीतम् ।
गुदाङ्कुरारोचकगुल्मपीनस-
प्लीहाग्निसादग्रहणीगदं जयेत् ॥ १०१

हरीतकीचित्रकनागराणां
क्वाथो यवक्षारपरागमिश्रः ।
प्रमार्ष्ट्यशेषेण गुदाङ्कुराणां
कुलं सहस्रांशुरिवान्धकारम् ॥ १०२

पथ्याबिल्वपुनर्नव-
बर्बराचिरबिल्वपञ्चकोलाम्भः ।
सैन्धवयुक्तमुदस्येद्
गुल्मग्रहणीप्लिहार्शांसि ॥

रक्तापामार्गजलैः
क्वाथो रक्तार्शसां च हितः ॥ १०३
दार्व्यम्बुदोशीरमयूरवत्स-
दुस्पर्शतोयातिविषैः कषायः ।
समाक्षिकः [1]साधु निषेव्यमाण-
श्चिरातिसारार्शमथो रुणद्धि ॥ १०४
चन्दनकुनिम्बधात्री-
धन्वयवासैः सवत्सकः क्वथितः ।
रक्तार्शसां प्रशमनो
दार्वीत्वगुशीरनिम्बं च ॥ १०५
भूनिम्बजलदचन्दन-
कुटजफलत्वक् च धातकी दार्वी ।
[2]चिरजातिसारसम्भव-
शोणितवेगं निगृह्णाति ॥ १०६
मुस्ताधान्यभयाकृष्णावारिवत्सकवल्कलैः ।
तथा कुनिम्बमधुकधन्वयासैश्च कं पिबेत् ॥ १०७
उदुम्बराम्बुकुटजरक्तोत्पलमयूरकम् ।
सपाठाधातकीमुस्तं स्यादर्शोऽथक्षतापहम् ॥ १०८
आर्द्रेन्दुराज्यौ कुटजस्य वल्कलं
मयूरमूलं च पृथक्कषायम् ।
[3]सधन्वयासाम्बुदवत्सकत्व-
ङ्महौषधोशीरशृतं पिबेद्वा ॥ १०९
उशीरारिष्टधात्रीत्वक्क्वाथः स्याच्छोणितार्शसाम् ।
उशीरकिञ्जल्कमृणालशीतं
शतावरीवत्सविषाऽम्बुदोत्थम् ।
रक्तार्शसां हन्ति बलं कषायं
वरारिमेदाख्यमहीरुहत्वक् ॥ ११०

1. स्वादु  2. गुञ्जा  3. नम्यासगंबुद

दुस्स्पर्शकेन बिल्वेन यवान्या नागरेण वा ।
एकैकेनापि संयुक्ता पाठा हन्त्यर्शसां रुजम् ॥ १११

कुटजफलबिल्वचित्रक-
महौषधप्रतिविषावचाचविकाः ।
धन्वयवासं पथ्या
दारुहरिद्रा गणोऽर्शोघ्नः ॥ ११२

कुलत्थलशुनैरण्ड[1]पाठाग्रन्थिकनागरैः ।
कषायः सयवक्षारः शूलोदावर्तनाशनः ॥ ११३

पथ्याकुलत्थलशुनश्रृतमेरण्डतैलयुक् ।
तोयं पेयमुदावर्तमूढवातानुलोमनम् ॥ ११४

॥ आमातिसारे ॥

नागरातिविषामुस्ताक्राथः स्यादामपाचनः ।
मुस्तातामलकीपथ्यानागरं चोष्णवारिणा ॥ ११५

वचाजलददेवाह्वनागरातिविषाऽभयाः ।
[2]तच्छृतं सलिलं पीतमामघ्नं दीपनं परम् ॥ ११६

हरिद्राद्वययष्ट्याह्वकलशीकुटजोद्भवाः ।
वचाहरिद्रादिगणा[3]वामातीसारनाशनौ ॥ ११७

करञ्जातिविषाहिङ्गुमुस्तावत्सकाचित्रकैः ।
कषायं पाययेन्नित्यमामातीसारनाशनम् ॥ ११८

पिप्पल्यतिविषा मुस्ता नागरं चेति पाचनम् ।
पक्के चापि प्रशंसन्ति मुनयो गौतमादयः ॥ ११९

मुस्ताभयाघनवचाऽतिविषाऽमराह्वै-
र्ग्रन्थ्यग्निबिल्वविषदारुमहौषधैर्वा ।
विश्वौषधाम्बुदविषैरथ वा कषाया
आमातिसारशमनाः कथितास्त्रयोऽमी ॥ १२०

---

1. पथ्याशुण्ठी
2 क्वथितं
3. वात

पाठानागरदुस्स्पर्शबिल्वपेशिबलाहकैः ।
तोयं सातिविषं पक्कमामातीसारसूदनम् ॥ १२१

मुस्ताकरञ्जातिविषाऽग्निबिल्व-
महौषधग्रन्थिकवत्सकानाम् ।
क्काथो [1]रुणद्ध्याममथो निरामं
प्रवृद्ध[2]शूलं त्वतिसारमुग्रम् ॥ १२२

करञ्जातिविषाशुण्ठीमुस्तावत्सकचित्रकैः ।
पाक्यमामातिसारघ्नं पिबेच्चाति प्रशस्यते ॥ १२३

शुण्ठ्यब्दातिविषापाठादारूग्राबीजवत्सकैः ।
क्काथः पीतो जयेत्पक्कामातिसारं चिरन्तनम् ॥
तामलक्यब्दशुण्ठीभिः क्काथः सर्वातिसारजित् ॥ १२४

शुण्ठ्युग्राकणपथ्यं
सैन्धवपाठाऽजमोदकल्कैश्च ।
[3]हितमतिसारे मुस्ता-
जलशुण्ठीबिल्वपक्काम्भः ॥ १२५

॥ वातातिसारे ॥

समङ्गाधातकीपाठाबिल्वपेशिबलाहकैः ।
क्काथो वातातिसारघ्नः सामे पक्के च शस्यते ॥ १२६
समङ्गाधातकीविश्वबिल्वग्रन्थिकतोयदैः ।
पक्कमम्भः प्रशमयेद्वातातीसारमुल्बणम् ॥ १२७
वचाबिल्वकणाविश्वकुष्ठदीप्यकवत्सकैः ।
सिद्धः क्काथो निहन्त्याशु वातातीसारमामयम् ॥ १२८

॥ पित्तातिसारे ॥

पलं वत्सकबीजस्य श्रपयित्वा रसं पिबेत् ।
मुस्ताकषायमेकं वा पिबेन्मधुसमायुतम् ॥ १२९

---

1. रुणद्ध्याममयोविरामं
2. मूलं
3. आमातिसार

चूतास्थि धातकीपुष्पं शुण्ठी दाडिमवल्कलम् ।
समङ्गोत्पलमुस्ता च लोध्रं [1]मोचरसः स्थिरा ॥ १३०
एतैः सातिविषैः क्राथः पित्तातीसारनाशनः ।
कदलीपुष्पनिःक्राथो जम्ब्वाम्राङ्कुरसाधितः ॥ १३१
सक्षौद्रो हन्त्यतीसारं पित्तजं [2]दुर्निवारणम् ।
धातक्यतिविषादार्वीवत्सकाम्बुदवारिभिः ॥ १३२
क्राथः पित्तातिसारघ्नो मध्वाज्यातिविषायुतः ।

॥ श्लेष्मातिसारे ॥

बिल्वकर्कटिका मुस्ता प्राणदा विश्वभेषजम् ।
वचाविडङ्गपूतीकधान्यकामरदारु च ॥ १३३
अथवा पिप्पलीमूलपिप्पलीद्वयचित्रकम् ।
पाठाऽग्निवत्सकग्रन्थितिक्ताशुण्ठीवचाऽभयाः ॥ १३४
क्वथिता यदि वा पिष्टाः श्लेष्मातीसारभेषजम् ।
चव्याब्दातिविषाकुष्ठं पाठा कटुकरोहिणी ॥ १३५
एतैः पथ्यायुतैः क्राथः श्लेष्मातीसारनुत्परम् ।
मुस्ताकरञ्जमूलत्वक्छुण्ठीभिः क्वथितं जलम् ॥
पिप्पलीचूर्णसंयुक्तं ग्रहणीमाशु नाशयेत् ॥ १३६

पिबेत्करञ्जाञ्जननागरं वा
पथ्यायुतं वाऽम्बुदसंयुतं वा ।
कफातिसारग्रहणीविकार-
शूलाग्निसादोदरगौरवेषु ॥ ३७

तामलक्यभयाशुण्ठीविषानिम्बामृतैः कृतः ।
क्राथो मरीचचूर्णाढ्यः श्लेष्मातीसारनाशनः ॥ ३८

श्यामाऽनन्तापद्मक-
कट्वङ्गककेसराग्निलोध्रजलम् ।
अम्बष्ठकीसमङ्गा-
मोचरसाम्रास्थि[3]भिर्जयेद् ग्रहणीम् ॥ १३९

1. मेचलसत्तिरा 2. दुर्नवादरम् । 3. विरद्दाग्रणी

स वत्सकः सातिविषः साबिल्वः
सोदीच्यमुस्तश्च शृतः कषायः ।
सामे सशूले च सशोणिते च
चिरप्रवृत्ते च हितोऽतिसारे ॥ १४०

॥ रक्तातिसारे ॥

पाठाऽमृतानीरदनागराणां
क्वाथो निहन्यादतिसारमाशु ।
सामं सशूलं रुधिरान्वितं च
प्रवाहिकां च ग्रहणीं च घोराम् ॥ १४१

बिल्वाम्बुदातिविषवत्सकपञ्चकोलै-
र्मुस्ताम्बुवत्सविषबिल्वपलैः कषायः ।
[1]लोध्राम्बुवत्सविषबिल्वफलैः शृतो वा
सामे सशूलरुधिरे च हितोऽतिसारे ॥ १४२

[2]जम्ब्वाम्रातिविषामुस्तासमङ्गोदीच्यनागरैः ।
कषायं श्लेष्मरक्तोत्थेष्वतिसारेषु योजयेत् ॥ १४३

मुस्ता कुष्ठं हरिद्रे द्वे पिप्पली देवदारु च ।
शटी च पिप्पलीमूलं मुस्तादि त्वष्टवर्गकम् ॥
अतिसारं निहन्त्याशु सश्लेष्माणं सशोणितम् ॥ १४४

कणमूलबिल्वदाडिम-
मोचरसाम्भोदविश्वदीप्यशृतम् ।
सलिलं सामनिराम-
मसृक्कफोत्थं च हन्त्यतीसारम् ॥ १४५

अरलुत्वगब्ददाडिम-
फलरम्भानाळिकेरपुष्पाम्भः ।
रक्तातिसारहरणं
भवति स्वरसश्च मधुयुतः पीतः ॥ १४६

1. धृष्टा 2. आकृष्या

पाठाकलिङ्गातिविषाऽब्दबिल्व-
दुस्पर्शवालौषधसंभृताम्भः ।
प्रशस्यते शोणितजेऽतिसारे
सामे निरामे ज्वरसंयुते च ॥ १४७

धातक्यातिविषाऽम्भोदचिञ्चाऽङ्कयरलुवत्सकम् ।
साम्रास्थिशाल्मलीवृन्तं रक्तातीसारभेषजम् ॥ १४८

नाळिकेरस्य पुष्पाणां क्वाथं वा पाययेद्भिषक् ।
कदळीपुष्पलोध्राम्भो रक्तातीसारनाशनम् ॥ १४९

वत्सकातिविषामुस्तबिल्वमोचरसाञ्जनम् ।
गैरिकं चन्दनोदीच्यमामलक्याः फलानि च ॥ १५०

कतकं मधुकं चैव कट्वङ्गं च शतावरी ।
सिद्धमेतैः कषायं तु रक्तस्रुतिमपास्यति ॥ १५१

॥ प्रवाहिकायाम् ॥

शुण्ठीमुस्तायवानां तु क्वाथो निर्वाहिकाऽपहः ।
क्वाथः कैडर्यकापत्रसिद्धो मरिचमिश्रितः ॥ १५२

सतैलो वाहिकां हन्ति गुल्मशूलं विशेषतः ।
[1]चाङ्गेरीकणविश्वानां निर्यूहः सैन्धवान्वितः ॥
पीतः प्रशमयत्याशु पवनादिनिबर्हणः ॥ १५३

सुरदारुकरञ्जबिल्वपेशी-
कणमूलातिविषाऽभयाऽम्बुदानाम् ।
सलिलं लवणोत्तमावगाढं
प्रपिबन्नाशु विनाशयेत् प्रवाहम् ॥ १५४

[2]प्राश्य नरः कणसंभव-
कल्कं स्वरसं कषायं च ।
क्षपयति तैलविमिश्रं
श्लेष्मातीसार[3]माशु बिम्बसीसहितम् ॥ १५५

---

1. शर्ङ्गेरे 2. प्रायुदरे 3. सातिबिम्बचिलाम्

॥ अजीर्णे ॥

कण्ठस्पृगेव शुण्ठी-
कण्टकशरपुङ्खमूलनिर्यूहः ।
अपहरति गदसमूहं
तूर्णमजीर्णं किमूदरतः ॥ १५६

मुस्ताजमोदपूतीकवचाशुण्ठ्यग्निधान्यकैः ।
सवालकशटीबिल्वैः क्वाथं तृट्शूलवान् पिबेत् ॥ १५७

पिप्पलीचूर्णसंयुक्तं शुण्ठ्यम्बूदरशूलनुत् ।
विषूचिकासु शस्तं स्यादम्लोद्गारयुतासु च ॥
सकण्टकं च पुङ्खी च कट्वङ्गं नागरं तथा ॥ १५८

शुण्ठीगायकशुण्ठी-
शुण्ठीश्रृतं कषायं वा । (?)
पेयां वाऽजीर्णेऽन्ने
विरुचिविषूच्यां पिबेन्मर्त्यः ॥ १५९

॥ ग्रहण्याम् ॥

विश्वानलचव्यारलु-
करञ्जयुग्मेषुपुङ्खपकाम्भः ।
ग्रहणीहितं महौषध-
वर्षाभूपुङ्खवारि वा सकणम् ॥ १६०

कैडर्यहिङ्गुपथ्या-
व्योषरसोनाजमोदासिद्धाम्भः ।
यः पिबति लवणलुलितं
[1]का तस्य कथाऽग्निमान्द्यस्य ॥ १६१

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
समस्तांश्चतुरस्त्रीन् वा द्वयं वा क्वथितं पिबेत् ॥
गुल्मप्लीहोदरानाहशूलघ्नं दीपनं परम् ॥ १६२

1. क्वाथस्य

दीप्यकमरिचाजाजी-
गण्डीरं साजगन्धमोदजलम् ।
शमयति सपञ्चकोलं
ज्वलयति जठरानलं सन्नम् ॥ १६३
दीप्यकमरिचाजाजी-
पथ्याकृष्णामहौषधैः कथितम् ।
पीनसगुल्मग्रहणी-
मन्दाग्निविषादि नाशयेदम्भः ॥ १६४
पाठाकरञ्जद्वयपञ्चकोलैः
कैडर्यपथ्याशरपुङ्खबिल्वैः ।
काथो निहन्यात् कणचूर्णयुक्तो
गुल्माग्निसादग्रहणीगुदोत्थान् ॥ १६५
पूतीकबिल्वपथ्याऽग्निकाथः [1]सैन्धवसंयुतः ।
शोषशूलग्रहण्यर्तिमग्निमान्धमरोचकम् ॥
पीनसं श्वासकासं च नाशयेन्नात्र संशयः ॥ १६६
व्योषाग्निचविकापथ्याभार्ङ्गीकाथः समाक्षिकः ।
स्वरसादाग्निसदनकासश्वासनिबर्हणः ॥ १६७
बिल्वं च कथितं पीतं परमाग्निविवर्धनम् ।
गुल्मग्रहणिकाऽष्ठीलप्लीहारोचकनाशनम् ॥ १६८
श्वासोर्ध्ववातदुर्नामशूलकृमिनिबर्हणम् ।
कफरोगेषु सर्वेषु प्रशस्तं कण्ठशुद्धिकृत् ॥ १६९
गन्धर्वहस्तकणमूलहुताशविश्वैः
सक्षारहिङ्गुलवणैर्विहितः कषायः ।
श्वासाग्निसादहृदयग्रहशूलगुल्म-
विड्बन्धपाण्डुकसनारुचिपीनसेषु ॥ १७०
पिप्पलीमूलचव्याग्निविश्वकाथं पिबेन्नरः ।
पिप्पलीचूर्णसंयुक्तं ग्रहणीदीपनं परम् ॥ १७१

1. सिन्धुचूर्णसमायुतः

शुण्ठीक्वाथे पिबेत् कल्कं कृष्णासैन्धवबिश्वजम् ।
ग्रहणीदीपनं श्रेष्ठं केवलं कल्कमेव वा ॥ १७२
पिप्पलीमूलसंसिद्धे क्वाथे नागरसैन्धवम् ।
चार्ङ्गेरीं चेति चूर्णं तु प्रपिबेद् ग्रहणीगदे ॥ १७३
शुण्ठीसमुस्तातिविषाक्वाथो वह्निविबोधनः ।
तृणगन्धस्य निक्वाथः सद्योऽजीर्णं व्यपोहति ॥ १७४
शुण्ठीसमुस्तातिविषागुडूचीः
पिबेज्जलेन क्वथिताः समांशाः ।
मन्दानलत्वेन सदाऽऽमतायाः-
मामानुबन्धग्रहणीगदे च ॥ १७५
शुण्ठीतामलकीक्वाथो यथाऽतिसरणापहः ।
शरपुङ्खशिफाशुण्ठीक्वाथस्तद्वद्द्विगुणः स्मृतः ॥ १७६
वचाऽऽदिसैन्धवोपेतो ग्रहण्यग्निविषादनुत् ।
नागरं पिप्पलीमूलं चित्रकं देवदारु च ॥ १७७
हरीतकी कणा चैव सिद्धमेभिर्जलं पिबेत् ।
हिङ्गुसैन्धवसंमिश्रं ग्रहण्यग्निविषादनुत् ॥ १७८
करञ्जबिल्वपूतीकविजयाकणनागरैः ।
क्वाथो गुल्माग्निसदनविबन्धारुचिनाशनः ॥ १७९
पथ्याकरञ्जयुगलाग्निमहौषधानां
क्वाथं सहिङ्गुलवणं पिबतां नराणाम् ।
गुल्माग्निसादगुदकीलकफातिसार-
हृद्रोगपाण्डवरुचयो निधनं प्रयान्ति ॥ १८०
त्र्यूषणं कफमेदोघ्नं मेहकुष्ठत्वगामयान् ।
निहन्यादरुचिं गुल्मपीनसाग्न्यल्पतामपि ॥ १८१
चव्याग्नित्रिवृतापथ्याशुण्ठीभिः क्वथितं जलम् ।
शमयेद्गुल्ममानाहमग्निसादमरोचकम् ॥ १८२
एरण्डबिल्वलशुनामरदारुपथ्या-
व्योषाग्निचव्यविहितः शमयेत् कषायः ।

शूलाग्निसादमखिलामपि वातपीडां
गुल्मारुचिश्वसनपीनसकासशोषान् ॥ १८३

पथ्याशुण्ठीशताह्वासघनकरिकणामूलचव्याग्नि[1]दीप्य-
वर्षाभूबिल्वसिद्धः शमयति सहसा सैन्धवाढ्यः कषायः ।

गुल्माष्ठीलाऽग्निसादप्लिहयकृदुदरश्वासकासातिसारान्
किञ्चान्यानप्यशेषाननलसमगुणो दैत्यसङ्घानिवेन्द्रः ॥ १८४

शुण्ठ्यग्निदेवकाष्ठानां क्वाथो वातकफापहः ।
गुदकीलाग्निसदनप्लीहाष्ठीलानिबर्हणः ॥ १८५

चविकाऽतिविषाकृष्णाकृष्णामूलमहौषधम् ।
हरीतकी च तत्सर्वं श्रपयित्वा जलं पिबेत् ॥ १८६

निहन्यादाममाध्मानं कासश्वासं च दारुणम् ।
दीपयेदनलं मन्दमेतत्काश्यपनिर्मितम् ॥ १८७

चविकापिप्पलीमूलपिप्पलीद्वयचित्रकैः ।
पाठाबिल्वयवानीभिः क्वाथो वह्निकृदामनुत् ॥ १८८

नागरं बिल्वमूलं च क्वथितं कुक्षिरोगजित् ।
[2]अग्निसादारुचिश्वासविबन्धानाहनुत्परम् ॥
पुनर्नवाग्निशुण्ठीनां क्वाथः कोष्णोऽनिलापहः ॥ १८९

॥ पिप्पल्यादिगणः ॥

पिप्पलीमूलमरिच[3]शुण्ठीचव्यहरेणुकाजमोदचित्रकयवपाठाजीरकसर्षप-महानिम्बफलहिङ्गुभार्ङ्गीमधुरसाऽतिविषाविळङ्गकटुरोहिण्यश्चेति पिप्पल्यादिः कफहरः प्रतिश्यायारोचकानिलादीन्निहन्याद् दीपनो गुल्मशूलघ्नः पाचनश्च । १९०

॥ अन्यः पिप्पल्यादिगणः ॥

पिप्पली नागरं पाठा शारिबा बृहतीद्वयम् ।
चित्रकं कटुकं बीजं दीप्यकं मरिचं वचा ॥ १९१
पिबेदग्निविवृद्ध्यर्थं कोष्ठवातहरं परम् ।

1. दग्ध 2 मग्नि 3. श्रृङ्गिबेर

## ॥ अपरः पिप्पल्यादिः ॥

पिप्पल्याग्निवचाकुष्ठमुस्ताग्रन्थिकवत्सकाः ॥ १९२
विश्वैलाह्पुषाश्चैव व्योषचव्ययवानिकाः ।
भार्ङ्गीमूर्वामहानिम्ब रुलाजाज्यः ससर्षपाः ॥ १९३
हिङ्गु तिक्ता विळङ्गं च पिप्पल्यादिरयं गणः ।
गुल्मारुचिप्रतिश्यायशूलारुचिनिबर्हणः ॥ १९४
दीपनः कोष्ठवातघ्नश्चामशूलनिबर्हणः ।

## ॥ दीपनीयगणः ॥

त्रिपिप्पल्याग्निचविकाहिङ्गुजीरकदीप्यकम् ॥ १९५
शृङ्गबेरं यवानी च दीपनीयमिदं स्मृतम् ।

## ॥ कोष्ठरोगहरगणः ॥

अनन्तातिविषापाठापिप्पलीमूलमेव च ॥ १९६
मरिचानि विळङ्गं च शृङ्गबेरं तथा वचा ।
पिप्पल्येलाऽभया भार्ङ्गी चित्रको रजनी तथा ॥ १९७
समङ्गा धातकी बिल्वनिर्यासः शाल्मली तथा ।
अजमोदाऽरुलुत्वक् च पद्मलोध्रवटाङ्कुरम् ॥ १९८
औषधानामेष गणः कोष्ठरोगविनाशनः ।
तानि वै सलिलेनात्र पेयानि मधुना सह ॥ १९९
विलेप्याद्यन्नपानानि सक्षीराणि घृतानि च ।
पेयायूषयवागूश्च भक्ष्यान् बहुविधानपि ॥
प्रकल्पयेद्भिषक्प्राज्ञस्तथा कोष्ठप्रलेपनम् ॥ २००

## ॥ हिङ्ग्वादिवर्गः ॥

हिङ्गुमरिचाम्लवेतस-
दीप्यकभल्लातकास्थिसंयोगात् ।
वर्गः सपञ्चकोलो
निर्दिष्टो दीपनीयोऽयम् ॥ २०१

## ॥ मूत्रकृच्छ्रे ॥

इक्षुद्वयं गोक्षुरकं शारिवा च शतावरी ।
देवदारु घनं मूर्वा यष्टीमधु हरीतकी ॥ २०२
दुग्धेन युक्तं पिबतः कृच्छ्रं पित्तं [1]च शाम्यति ।
ह्रस्वं ‡हत्यंशुमतीद्वयगोक्षुरकैः स्मृतम् ॥ २०३
स्वादुपाकरसं नातिशीतोष्णं सर्वदोषजित् ।
बृहत्यादिगणैः सिद्धं द्विगुणीकृतगोक्षुरैः ॥
तोयं पयो वा सर्पिर्वा सर्वमूत्रविकारजित् ॥ २०४

## ॥ वीरतरादिवर्गः ॥

वेल्लन्तरारणिकबूकवृषाश्मभेद-
गोकण्टकेत्कटसहाचरबाणकाशाः ।
वृक्षादनीनळकुशद्वयगुच्छगुन्द्रा-
भल्लूकमोरटकुरण्ट[2]करम्भपार्थाः ॥ २०५
वर्गो वीरतराद्योऽयं हन्ति वातकृतान् गदान् ।
अश्मरीशर्करामूत्रकृच्छ्राघातरुजाऽपहः ॥ २०६

## ॥ पथ्याऽऽदिक्वाथः ॥

पथ्यागोक्षुरशम्याकधन्वयासाक्षभेषजैः ।
क्वाथं पिबेत् सरुग्दाहकृच्छ्रजित्स्यान्मधुप्लुतम् ॥ २०७

## ॥ मत्स्याक्षिकषायः ॥

पर्युषितमुषसि पेषितं
प्रसादयत्यम्बु शोणमतिकलुषम् ।
कतकास्थिकल्कगर्भो
[3]हिमश्च मत्स्याक्षिनिःक्वाथः ॥ २०८

1. त्वथ वातलांश्च 2. करञ्ज 3. शिशिरो

॥ बृहत्यादिः ॥

बृहतीधावनीपाठायष्टीमधुकलिङ्गिकाः ।
पाचनीयो बृहत्यादिः कृच्छ्रदोषक्षयापहः ॥ २०९

॥ गोकण्टकक्वाथः ॥

गोकण्टकस्य निःक्वाथो मूत्रकृच्छ्रविनाशनः ।

॥ ह्रस्वपञ्चमूलम् ॥

पथ्यो बृहत्यंशुमतीद्वयगोकण्टजोऽश्मजित् ॥ २१०

.... ... . ...

... ... ... । (?)

तत्सिद्धमम्भः परिचूर्णितैलं
[1]कृच्छ्राणि कृच्छ्राणि नृणां निहन्ति ॥ २११

॥ व्याघ्र्यादिक्षीरकषायः ॥

व्याघ्रीगोक्षुरमत्स्याक्षिपद्मापाषाणभेदकैः ।
शृतः क्षीरावशिष्टोऽयं कषायः शर्कराऽन्वितः ॥
मूत्रकृच्छ्राणि सर्वाणि रक्तस्रावं विनाशयेत् ॥ २१२

॥ गोपाङ्गनाऽऽदिकषायः ॥

गोपाङ्गनाऽभीरुकशेरुवारि-
विदारिगोकण्टकसंभृताम्भः ।
सशर्करं [2]स्रावयते नराणां
मूत्रं महानिग्रहपीडितानाम् ॥ २१३

॥ एलोपकुल्यादिक्वाथः ॥

एलोपकुल्यामधुकाश्मभेद-
कान्ताश्वदंष्ट्रावृषकोरुबूकैः ।
क्वाथं पिबेच्छर्करयाऽवगाढं
कृच्छ्रे सदाहे सरुजे विबन्धे ॥ २१४

---

1. कृच्छ्राण्यकृच्छ्रणं    2. संसरणं ।

॥ हरीतक्यादिक्काथः ॥

हरीतकीगोक्षुरराजवृक्ष-
पाषाणभिद्धन्वयवासकानाम् ।
क्काथं पिबेदश्मभिदा प्रगाढं
सशर्करे चाश्मरिमूत्रकृच्छ्रे ॥ २१५

॥ श्वदंष्ट्राऽऽदिकषायः ॥

श्वदंष्ट्रामातुलुङ्गाङ्घ्रिशोभाञ्जनश्टतं जलम् ।
व्योषचूर्णसमायुक्तं शर्कराशूलसूदनम् ॥ २१६

॥ पिप्पलिपर्णीक्काथः ॥

क्काथः पिप्पलिपर्ण्युत्थो हिङ्गुतैलयुतो हरेत् ।
शर्करामश्मरीं चापि मूत्रकृच्छ्रमथापि वा ॥

॥ शिग्रुमूलक्काथः ॥

क्काथश्च शिग्रुमूलोत्थः कदुष्णोऽश्मरिपातनः ॥ २१७

॥ क्षीरकषाययोगौ ॥

भद्रशिफापरिपक्वः
क्काथः पीतः पयःशिष्टः ।
शिष्टैरप्युपदिष्टः
मृणालिकामूलसिद्धश्च ॥ २१८

॥ सिन्दुवारादिकषायः ॥

सिन्दुवारनिशावारि वारयेन्मेढ्रशर्कराः ।

॥ तालपत्रकषायः ॥

तालपत्रकषायं च मूत्राघातेषु पाययेत् ॥ २१९

॥ पाषाणभेद्यादिक्काथः ॥

पाषाणभेदि शुण्ठी च मुरुङ्गी गोक्षुरं तथा ।
कषाय एषां पातव्यो मूत्रकृच्छ्रविनाशनः ॥ २२०

## ॥ सिंह्यब्दादिक्वाथः ॥

सिंह्यब्दशिग्रुवरणद्विपुनर्नवानां
काथः कणाऽश्मजतुदुग्धयुतोऽश्मरिघ्नः ।

## ॥ कौन्त्यादिक्वाथः ॥

कौन्त्यश्यभिन्मधुकगोक्षुरचित्रकृष्णा-
काथोऽद्रिजैलसहितोऽश्मरिमूत्रजित् सः ॥ २२१

## ॥ अन्यः पाषाणभिदादिक्वाथः ॥

पाषाणभित्त्रिकटुमूलहरीतकीभिः
सारेवतं कथितमाशु जलं निहन्ति ।
प्रातः शिलाजतुयुतं परिदाहकृच्छ्र-
तोदार्तिमूत्रकृतदोषमथाश्मरीं च ॥ २२२

## ॥ निर्गुण्ड्यादिः ॥

निर्गुण्ड्येरण्डकोरण्टगोक्षुरद्विपुनर्नवैः ।
पञ्चकोलाभयाशीघ्रकुलत्थैश्च शृतं जलम् ॥ २२३
अश्मरीभेदनं श्रेष्ठं मूत्रकृच्छ्रहरं परम् ।

## ॥ कपोतवङ्कादिचूर्णम् ॥

कपोतवङ्कावरणगृञ्जनं मधु शीघ्रकम् ॥ २२४
यूथी गोक्षुरकं पथ्या तिलो मत्स्याक्षकस्तथा ।
सूकरं खरमञ्जर्या मूलं चापि शिलाजतु ॥ २२५
चूर्णयित्वा समालोड्य पाययेदातुरं भिषक् ।
शर्करामश्मरीं सर्वां सिकतां सर्वदोषजाम् ॥ २२६
मूत्रदोषकृतान् घोरान् हन्यादन्यांश्च वस्तिगान् ।
एतैरेव घृतं कार्यं खलं वा विधिपूर्वकम् ॥ २२७

## ॥ वरणकषायः ॥

वरणजकषायपीत-
स्तत्कल्कः सुमधुयुतस्तथा सगुलः ।
नाशयति विकलीकृत-
मश्मोपममश्मरिं तथ्यम् ॥ २२८

## ॥ यूथ्यादिकाथः ॥

यूथीमत्स्याक्षिशीघ्रद्वयवरणशिफाभद्रकाश्वदंष्ट्रा-
दुर्मार्गादित्यभक्तावसुकरविशिरः कृष्णवर्णाः कुलत्थाः ।
काथस्तैर्नालिकेरोद्भवजलसहितः पिप्पली[1]चूर्णयुक्तो
वातश्लेष्मोल्बणां वै शमयति सहसा शर्करामश्मरीं च ॥ २२९

## ॥ प्रमेहे ॥

दार्वी[2]रसो धात्रिफलं मुस्ता च कथितं जले ।
मधुयुक्तं गुलूच्या वा रसस्त्वामलकस्य वा ॥ २३०
लोध्राभयातोयदकट्फलानां
पाठाविलङ्गार्जुनवत्सकानाम् ।
गायत्रिदार्वी [3]कलशीभवानां
फलत्रयक्षौद्रयुतः कषायः ॥ २३१
कतकामलके वारिद-
कोठनिशाः किंशुकत्वगभये च ।
एकद्वित्र्यशाना-
मिक्षोर्युक्तो रसेन मेहे स्यात् ॥ २३२
आरग्वधस्य मूलत्वग्धात्री चैवामृता तथा ।
कषायः क्षौद्रसंयुक्तो मेहतत्कुलनाशनः ॥ २३३

1. श्लेष्मजांश्च 2. सुरा 3. क्रमजित्

तदेव पानं परिपक्वमम्भसा
स्यादाभकल्कं [1]विधुनोति मेहम् ।
पथ्याऽब्दकोठरजनीद्वयशुक्तिपत्र-
कृष्णाऽरिमेदकगुडूचिशृतं च वारि ॥ २३४
धान्यङ्कोलाम्रार्जुन-
मुनितरुवल्केषु साधितं तैलम् ।
स्याद्द्विनिशासितगुञ्जा-
कल्कं मेहेषु [2]कीर्तितं परमम् ॥ २३५
गुळूच्यामलककाथो मध्वाद्यैर्मेहनुत्परम् ।
तृष्णादाहप्रशमनो ज्वरारोचकनाशनः ॥ २३६
कालशाकेन केतक्या निशया च शृतं जलम् ।
प्रमेहाणां विनाशाय योजयेत् सततं भिषक् ॥ २३७
निशायुक् शुक्तिपत्राङ्घ्रिरम्भाजम्बूत्वगुद्भवः ।
पाठाऽमृताऽब्दकतककाथो मेहे समाक्षिकौ ॥ २३८
कैडर्यहेमद्रुमतालमूल-
वरानिशायुग्मशृतं कषायम् ।
पिबेद्यवाशी तमिति प्रमेहे
कल्कं वटानां मधुनैव नित्यम् ॥ २३९
कर्कन्धुमूलकात्सिद्धः कषायः क्षौद्रसंयुतः ।
प्रमेहं मूत्रदोषांश्च नाशयेन्नात्र संशयः ॥ २४०
पथ्याऽब्दकोठकैडर्यहरिद्राऽम्भोविडङ्गकान् ।
अयःशलाकामभयां कृष्णां निम्बं सवत्सकम् ॥ २४१
पक्त्वाऽऽढ्यं माक्षिकेनैव प्रातःकाले पिबेन्नरः ।
स्थौल्यदोषे प्रमेहे च मेदस्वी कुष्ठवानपि ॥ २४२

॥ एलाऽऽदिगणः ॥

एला[3]युग्मतुरुष्ककुष्ठफलिनीमांसीजलध्यामक-
स्पृक्काचोरकचोरपत्रतगरस्थौणेयजातीरसाः ।

---

1. विदुनोति 2. कल्कन्नम् । 3. गुल्म

शुक्तिर्व्याघ्रनखामराह्वमगरुः श्रीवेष्टकं कुङ्कुमं
[1]चण्डागुग्गुलुदेवधूपखपुराः पुन्नागनागाह्वयम् ॥ २४३
एलाऽऽदिको वातकफौ विषं च विनियच्छति ।
वर्णप्रसादनः कण्डूपिडकाकोठनाशनः ॥ २४४

॥ वरणादिगणः ॥

वरणसैर्यकयुग्मशतावरी-
दहनमोरटबिल्वविषाणिकाः ।
द्विबृहतीद्विकरञ्जजयाद्वयं
बहलपल्लवदर्भरुजाकराः ॥ २४५
वरणादिः कफं मेदो मन्दाग्निं च नियच्छति ।
आढ्यवातं शिरःशूलं गुल्मं चान्तः सविद्रधिम् ॥ २४६

॥ त्रायन्त्यादिकषायः ॥

त्रायन्तित्रिफलानिम्बकटुकामधुकं समम् ।
त्रिवृत्पटोलमूलाभ्यां चत्वारोंऽशाः पृथक् तथा ॥ २४७
मसूरान्निस्तुषादष्टौ तत्क्वाथः सघृतो जयेत् ।
विद्रधीगुल्मवीसर्पदाहमेहवमिज्वरान् ॥ २४८

॥ अन्त्रवृद्धौ ॥

हिङ्गुसैन्धवकासीसशिलाजतुसमायुतः ।
मोरटस्य कषायो हि सप्तवृद्धिमपोहति ॥ २४९
इन्द्रवल्लीबलैरण्डक्वाथो [2]वा वृद्धिनाशनः ।
इन्द्रवल्लीकषायस्तु पातव्यस्तैलसंयुतः ॥
अन्त्रवृद्धिविनाशाय तत् [3]खलेनैव भोजयेत् ॥ २५०
यक्षाक्षिबीजमज्जा-
द्विगुणकुलत्थेन पाचिते क्वाथे ।
घृतपटुहिङ्गुसनाथे
पीते वृद्धेः कुतो वृद्धिः ॥ २५१

---

1. चोर्ष 2. विद्रधि 3. खल्वेन

वेणुपत्रकषायो वा तैलसैन्धवसंयुतः ।
पीयमानो निहन्त्याशु सर्वशूलान्त्रवेदनाः ॥ २५२

लशुनैरण्डयक्षाक्षिविषाभूहपुषौषधम् ।
क्वथितं हिङ्गुयुग् हन्या[1]द्गुल्मानाहोदराण्यपि ॥ २५३

लशुनगोक्षुरशक्रलताऽभया-
हपुषयक्षदृगग्निकणौषधैः ।
सहपुनर्नवमोरटशिग्रुभि-
र्जयति वृद्ध्युदराणि शृतं जलम् ॥ २५४

॥ गुल्मे ॥

चव्यव्योषविडङ्गाग्नित्रिफलाविश्वभेषजैः ।
क्वाथः पवनगुल्मघ्नः शूलानाहान्निहन्ति च ॥ २५५

बिल्वमूलबलाशुण्ठीचित्रकाग्निपुनर्नवैः ।
क्वाथोऽनिलजगुल्माग्निमान्द्यवातोत्थशूलनुत् ॥ २५६

गुल्मे विलसति शूला-
निलसङ्गाध्मानकारिणि प्रबले ।
यक्षदृगाग्निपुनर्नव-
बर्बरलशुनौषधं [2]पेयम् ॥ २५७

पञ्चमूललशुनक्वथिताम्भो
हिङ्गुसैन्धवरजःपरिमिश्रम् ।
कोष्ठमारुतगुदाङ्कुरगुल्मं
शूलमन्तरग्निसदनं च निहन्ति ॥ २५८

लशुनपुनर्नवाविश्वं
सैन्धवचूर्णप्रतीवापम् ।
श्रपयित्वा परिपीतं
गुल्मानुन्मूलयेन्नित्यम् ॥ २५९

---

1. द्गुदरानाहगुल्मानि
2. पीतः ।

व्योषपूतिकवर्षाभूपथ्याग्रन्थिकृशानुभिः ।
काथो गुल्मकुठाराख्यः सहिङ्गुबिडसैन्धवः ॥ २६०
शुण्ठीचित्रकचव्याग्निबिल्वमूलपुनर्नवैः ।
पीतः क्षीरकषायोऽयं सशूलानाहगुल्मनुत् ॥ २६१
पथ्यापुनर्नवकृशानुमहौषधानां
काथो हिनस्ति गुदकीलविबन्धगुल्मान् ।
तद्वत्पुनर्नवमहौषधचित्रकाणां
पाक्यं च गुल्ममधुसूदनमामनन्ति ॥ २६२
पथ्यानागरकैडर्यकषायं सैन्धवान्वितम् ।
पिबेद्गुल्मेषु सर्वेषु मन्दाग्नौ च विशेषतः ॥ २६३
शुण्ठीबिल्वबलाकाथ आज्यतुल्यं च रामठम् ।
सर्वगुल्महरः पीतो गार्भिण्या हिङ्गुना विना ॥ २६४
विजयाशृङ्गवेराग्निद्विकरञ्जपुनर्नवैः ।
काथः करिकणामिश्रो गुल्महृच्चाग्निदीपनः ॥ २६५
कुलत्थविश्ववह्नीनां काथो गुल्महरः परः ।
चविकाग्नित्रिवृत्पथ्याशुण्ठीभिः कथितं [1]जयेत् ॥ २६६
गुल्मशूलमदानाहमग्निसादमरोचकम् ।
करञ्जबिल्वपूतीकविजयाकणनागरैः ॥ २६७
काथो गुल्माग्निसदनविबन्धारुचिनाशनः ।
दशमूलकषायेण हिङ्गुसैन्धवनागरम् ॥ २६८
अन्नादौ प्रपिबेद्गुल्मे विशेषान्मारुतोल्बणे ।
एवं कुलत्थयूषेण शुण्ठीकाथेन वा पिबेत् ॥ २६९
बिल्वमूलबलाशुण्ठीचित्रवह्निपुनर्नवैः ।
बिल्वमूलौषधाभ्यां वा काथः पवनगुल्मनुत् ॥ २७०
शुण्ठीलशुनदेवाह्वनिर्यूहः स्नेहवाञ्जयेत् ।
कोष्ठमारुतगुल्माग्निमान्द्यशूलं प्रभञ्जनात् ॥ २७१

1. जलम्

बिल्वमूलं बलामूलं निर्गुण्डीमूलमेव च ।
एरण्डस्य तु मूलं च क्वाथमेतैर्विपाचयेत् ॥ २७२
निहन्यादूर्ध्ववातोत्थशूलगुल्मं सवेदनम् ।
कुबेराक्षिकुलत्थं च रामठं लशुनानि च ॥ २७३
तैर्जलं संयुतं पेयं वातगुल्मविनाशनम् ।
शुण्ठीग्रन्थिकचव्याग्निकृष्णाक्वाथः ससैन्धवः ॥
[1]कदुष्णः श्लेष्मगुल्मघ्नो हिङ्गुतैलसमायुतः ॥ २७४

विश्वाभयाचित्रकपिप्पलीभि-
र्विपक्वमम्भः परिपीयमानम् ।
आनाहविड्भेदमपक्तिशक्तिं
व्यपोहति द्राक् कफजं च गुल्मम् ॥ २७५

हरितमञ्जरिमूलरसोनक-
त्रिकटुबर्बराशिग्रुपुनर्नवैः ।
सलिलमुत्क्वथितं पटुहिङ्गुम-
ज्जयति गुल्ममिदं कफवातजम् ॥ २७६

त्रिकट्वजाजीदहनाभयानां
कटूत्कटं ये प्रपिबन्ति [2]तोयम् ।
कफोत्तरानाहविबन्धगुल्म-
दुर्नामवातानपि ते त्यजन्ति ॥ २७७

## ॥ कणाशताह्वाऽऽदिक्वाथः ॥

कणाशताह्वाद्विकरञ्जदारु-
भार्ङ्गीकुलत्थैः [3]सतिलैर्विपक्वम् ।
तथा रसोनेन च सिद्धमम्बु
सहिङ्गुकल्कं [4]हितमस्रगुल्मे ॥ २७८

1. कटूष्णः
2. क्वाथः
3. सलिले
4. प्रतिरक्तगुल्मम्

## ॥ मागध्यादिक्काथः ॥

मागधिबिल्वपुनर्नव-
शिखिबर्बरधान्यचव्यमूलानाम् ।
शुक्तिपलाशमयूरक-
भस्मसखो गुल्महा क्वाथः ॥ २७९

## ॥ शूले ॥

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
पञ्चकोल इति ख्यातः पञ्चशूलविनाशनः ॥ २८०
एतैरेव यवागूं च साधयेच्च भिषग्वरः ।
पञ्चकोलाभयाक्वाथः पिप्पलीचूर्णसंयुतः ॥ २८१
पेयः कदुष्णः शूलेषु मन्दाग्नौ च विशेषतः ।
स देयः स्यात्सलवणो गुल्मे च मलबन्धने ॥ २८२
तैलयुक्तं च सर्वेषु वातरोगेषु शस्यते ।
चित्रकग्रन्थिकैरण्डशुण्ठीक्वाथः परं हितः ॥ २८३
शूलानाहविबन्धेषु सहिङ्गुबिडसैन्धवः ।
पीनसश्वासकासघ्नः कोष्ठवातनिबर्हणः ॥ २८४
क्वाथः कुलत्थपथ्या-
किंशुकजो हिङ्गुसिन्धुसंमिश्रः ।
शर्करीळमशर्करीळं (?)
शमयेच्छूलं तथाऽग्निसादं च ॥ २८५
निर्गुण्ड्येरण्डकोरण्टशुण्ठीचित्रकबिल्वकैः ।
क्वाथो हिङ्गुकणायुक्तः शूलमाशु व्यपोहति ॥ २८६
किंशुकस्य त्रयो भागा एकभागं महौषधम् ।
हिङ्गुसैन्धवसांमिश्रं पिबेच्छूलविनाशनम् ॥ २८७
पारिभद्रस्त्वचं शुण्ठी लशुनं तैः शृतं जलम् ।
हिङ्गुसैन्धवसंयुक्तं पिबेच्छूलविनाशनम् ॥ २८८

शुण्ठी कुलत्थं लशुनं कुठेरो
देवद्रु यक्षाक्षि च तैः कषायः ।
सिन्धूत्थहिङ्गूरुबुतैलमिश्रः
शूलं च वृद्धिं च निहन्ति तूर्णम् ॥ २८९

निर्गुण्ड्येरण्डकोरण्टक्राथः शूलप्रशान्तये ।
निर्गुण्ड्येरण्डकोरण्टगोक्षुरद्विपुनर्नवैः ॥ २९०

पञ्चकोलाभयाशीघ्रकुलत्थैश्च शृतं जलम् ।
सक्षारहिङ्गुलवणं सर्वशूलनिबर्हणम् ॥ २९१

शुण्ठीकिंशुकचर्मभ्यां शृतः क्राथोऽग्निदीपनः ।
वातगुल्माग्निसादार्शोऽरुचिशूलनिबर्हणः ॥ २९२

एरण्डशिग्रुलशुनाग्निपुनर्नवाना-
मेरण्डतैलसहितं कथितं निहन्यात् ।
श्वासप्लिहापवनशूलमहोदराणि
चाष्ठीलिकारुधिरविद्रधि[1]वृद्धिगुल्मान् ॥ २९३

रसोनशुण्ठिनिर्गुण्डीबर्बरैरम्बु संभृतम् ।
चित्रतैला[2]विलं पीत्वा वातशूलात्प्रमुच्यते ॥ २९४

व्याघ्री सहिङ्गुः कुशकाशमूलं
श्वदंष्ट्रमिक्षोरथ नालिकायाः ।
मूलं तथैरण्डभवः कषायः
पित्तात्मकं हन्त्यचिरेण शूलम् ॥ २९५

किंशुकवल्कलशुण्ठी-
वर्षाभूलशुनदहनाम्भः ।
सैन्धवहिङ्गुसनाथं
झडिति दृढं हन्ति कफशूलम् ॥ २९६

कृशानुशिग्रुनिर्गुण्डीगोकण्टकशृतं जलम् ।
कृष्णापरागसंमिश्रं शर्कराशूलनाशनम् ॥ २९७

---

1. वस्ति
2. विलंबित्वाद्

दशमूलरसोनाभ्यां समाभ्यां साधु साधितम् ।
चित्रतैलं तथा पीत्वा गुल्मशूलात् प्रमुच्यते ॥ २९८
कुलत्थशुण्ठीनिर्गुण्डीपिप्पलीकाथितं पिबेत् ।
सतैलसंयुतक्षारं गुल्मशूलविनाशनम् ॥ २९९
रसोनशुण्ठीवर्षाभूकिंशुकत्वक्शृतं जलम् ।
पटुहिङ्गुयुतं पीतं गुल्मशूलविनाशनम् ॥ ३००
पथ्यालशुननिर्गुण्डीपञ्चकोलसमं शृतम् ।
बलालशुनबिल्वोत्थं गुल्मशूलहरं परम् ॥ ३०१
कुलत्थवह्निवर्षाभूकाथस्सैरण्डतैलकः ।
सिन्धुहिङ्गुत्रिवृद्युक्तो गुल्मशूलविनाशनः ॥ ३०२
मरीचप्राणदाशुण्ठीकाथः कण्ठ्यः ससैन्धवः ।
दीपनः पाचनो गुल्मशूलवातकफं जयेत् ॥ ३०३
एरण्डयक्षवृक्शिग्रुलशुनं सपुनर्नवम् ।
कुलत्थं च कषायोऽयं दीपनो गुल्मशूलनुत् ॥ ३०४
चविकाग्नित्रिवृत्पथ्याशुण्ठीभिः क्वथितं जयेत् ।
गुल्मशूलमदानाहमग्निसादमरोचकम् ॥ ३०५
त्रिकण्टकं बला व्याघ्री वृश्चिकाली शतावरी ।
द्वे बृहत्यौ चातिविषा गुडूची कासमर्दिका ॥ ३०६
पाठा पटोलभार्ङ्गी च [1]वार्ताकालर्ककुण्डलि ।
एतत्काथ्यं कषायः स्यात् पिप्पलीक्षौद्रसंयुतः ॥ ३०७
कासश्वासप्रतिश्यायगुल्मशूलक्षयापहः ।
पूतीकपथ्यात्रिकटुचित्रकक्वथितं जलम् ॥
गुल्मशूलाग्निसदनक्षयारोचकनाशनम् ॥ ३०८

दीप्यकमरिचाजाजी-
गण्डीरं साजगन्धदशमूलम् ।
शमयति सपञ्चकोलं
शोफं मदशूलमाज्येन ॥ ३०९

महौषधग्रन्थिकबिल्वमूलैः
शृतं जलं सैन्धवरेणुमिश्रम् ।
प्रणाशयत्याशु निषेव्यमाण-
मानाहमूलारुचिमग्निमान्द्यम् ॥ ३१०

॥ महोदरे ॥

चव्यं विलङ्गं सुरदारुवह्नि-
पुनर्नवाः साधिततोयमेभिः ।
पीतं निहन्याज्जठरं प्रगाढं
शोफार्शसी गुल्ममथोर्ध्ववातान् ॥ ३११

गण्डीरशृङ्गबेराभ्यां क्वाथो जठरशूलनुत् ।
चव्याग्निबिल्ववर्षाभूदेवदारुशृतं जलम् ॥
महोदरार्शोगुल्मोर्ध्ववातशूलविनाशनम् ॥ ३१२

विलङ्गचव्यामरदारुविश्व-
पुनर्नवैश्च क्वथितः कषायः ।
शोफोर्ध्ववातप्लिहगुल्मरोगान्
व्यपोहति द्राग् जठरानशेषान् ॥ ३१३

रोहीतकाभयाक्वाथः कृष्णाकल्कसमन्वितः ।
सप्तरात्रप्रयोगेण शोषयत्युदरामयम् ॥ ३१४

अजगन्धाऽभयाकृष्णारोहितैः सपुराह्वयैः ।
पक्को गुल्मोदरप्लीहवह्निमान्द्योदरापहः ॥ ३१५

गवाक्षीशङ्खिनीदन्तित्रिवृत्पथ्यापुनर्नवैः ।
[1]सलिलं जठराध्मानगुल्मार्शोविड्ग्रहापहम् ॥ ३१६

---

1. करणं

शङ्खिन्यभयाचित्रा-
सिद्धः काथस्त्रिभागशिष्टः स्यात् ।
चित्रातैलसनाथः
पीतः सर्वोदरार्तिघ्नः ॥ ३१७

दशमूलरसोनमागधानां
सलिलं ये वै पिबन्ति ते त्यजन्ति ।
प्रबलानिलशोषगुल्मक-
नाहोदरमूर्ध्ववातांश्च ॥ ३१८

द्विगुणोध्वंकृष्णलानल-
हिङ्गुसमस्तूकपयोखिलाद्विगुणम् । ?
पटुपिष्टाभिलषङ्गुण-
कीरेक्षारण पक्वमुदरघ्नम् ॥ ? ३१९

आरग्वधत्वक्कथितः कषायः
सर्वोदरं संहरते दशाहात् ।
तथाऽभयाभिः कणरेणुमिश्रं
कृष्णाऽभयैरण्डशि का[1]न्वितं च ॥ ३२०

कृष्णानिम्बाभयाकृष्णामूलैश्च कथितं जलम् ।
पीतमानाहगुल्मार्शःशोफोदरनिबर्हणम् ॥ ३२१

भूनिम्बचव्याकणाचित्रकाणां
रसं पिबेत् [2]स्नुक्पयसा समेतम् ।
हिनस्ति सर्वाण्युदराणि शीघ्रं
महाबलो वायुरिवाभ्रवृन्दम् ॥ ३२२

निकुम्भकुम्भत्रिफलागवाक्षी-
स्नुक्तिल्वकैः कल्पितमम्बु पीतम् ।
सहेमदुग्धं सकणं विरेका-
ज्जयत्युदावर्तगरोदराणि ॥ ३२३

1. त्तयंच 2. स्नुक्षयसा

पथ्यात्रिवृच्छिफात्वग्भिः क्वाथो हन्यान्महोदरम् ।
[1]सर्व एष विधिः पाण्डुशोफप्लीहयकृत्सु च ॥ ३२४
लशुनैरण्डशिग्रूणां क्वाथः कृष्णापरागवान् ।
वातोदरमशेषेण क्षपयेन्नात्र संशयः ॥ ३२५
चविकाविजयाशुण्ठीदेवदारुपुनर्नवम् ।
कथितं कल्कितं चूर्णं शोफार्शोजठरापहम् ॥ ३२६
दशमूलवरापञ्चकोलाम्भः पटुमिश्रितम् ।
पिबेत्क्रमाद्वातपित्तकफजे जठरे नरः ॥ ३२७

॥ प्लीहयकृतोः ॥

कृष्णालशुनपथ्यानां पाक्यमेरण्डतैलवत् ।
पिबतो विलयं याति प्लीहगुल्मगुदोद्भवम् ॥ ३२८
देवकाष्ठं च लशुनं कुबेराक्षी तपस्विनी ।
एरण्डलतैलसंयुक्तं यकृद्दाळिविनाशनम् ॥ ३२९
पूतिकं चित्रकं शुण्ठी मधुशिग्रुपुनर्नवौ ।
कुलत्थश्च कषायः स्याद्धिङ्गुसैन्धवसंयुतः ॥ ३३०
यकृद्दार्ढ्यप्लीहशूले गुल्मेऽप्यन्तराविद्रधौ ।
त्रिकटु त्रिफला हिङ्गु तथा लवणचित्रकौ ॥
अर्कमूलं कषायः स्याद्यकृद्दार्ढ्यविनाशनः ॥ ३३१

॥ पाण्डुरोगे ॥

[2]पथ्या कुलत्थं लशुनं शिग्रुमूलपुनर्नवौ ।
एरण्डतैलसंयुक्तं कषायं प्रपिबेन्नरः ॥ ३३२

॥ वासाऽऽदिकषायः ॥

[3]वासागुळूचीत्रिफलाकट्वीभूनिम्बनिम्बजः ।
क्षौद्रेण युक्तो हन्त्याशु पाण्डुपित्तास्रकामिलाः ॥ ३३३

1. सर्वविधिस्वकृमिपाण्डुशोफ-यकृत्प्लीहादेश्व
2. अभया
3. पाठा

॥ पथ्याऽमृताऽऽदिकषायः ॥

पथ्याऽमृता च घोण्टा च चित्रमूलपुनर्नवौ ।
पाठाकषायसंयुक्तं पाण्डुरोगविनाशनम् ॥

॥ ह्रस्वपञ्चमूलप्रयोगः ॥

कनीयःपञ्चमूलाम्बु शस्यते पानभोजने ॥ ३३४

॥ कैडर्यपथ्याऽऽदिकषायः ॥

कैडर्यपथ्याकृमिजि[1]न्निशानां
रसं पिबेन्मागधरेणुमिश्रम् ।
पिण्डोत्थपाण्डुक्रिमिगुल्मरोग-
दुर्नामबाधिर्यमपाकरोति ॥ ३३५

॥ कामिलायाम् ॥

काललोहयुतमामलेन वा
साधिताम्बु च सतिन्त्रिणीदलम् ।
चूर्णितोषणसखं विदुनोति
स्थौल्यदोषसहितां च कामिलाम् ॥ ३३६
तामलक्यभयाक्वाथः कामिलामाशु नाशयेत् ।
पिप्पल्यग्नि[2]शिफाविश्वैः पञ्चद्वित्र्यंशकैः शृतः ॥ ३३७
क्वाथः प्रातः प्रपीतस्तु विलुम्पति जलोदरम् ।
तामलक्यभयाविश्वकुलत्थक्वथितं जलम् ॥
कामिलाऽनलसादोत्थगुल्मानाहान् व्यपोहति ॥ ३३८
अतिबलया शृतमम्भः
कामिलमानाहमूत्रवैवर्ण्यम् ।
व्यपनयति पीयमानं
शीतकमपि दाहपरिमिश्रम् ॥ ३३९

1. नराणां  2. यवा

यष्ट्यामलकनिकाथस्तत्कल्को वाऽक्षसंमितः ।
सद्यः प्रशमयत्याशु विकारान् कामिला[1]भवान् ॥ ३४०
वासामधूलिकानिम्बकटुकाऽमृतवालकैः ।
काथस्तु कामिलां हन्यात् सिताक्षौद्राज्यसंयुतः ॥ ३४१

॥ शोफे ॥

पिप्पली पिप्पलीमूलं विश्वचित्रकगोक्षुराः ।
पञ्चामी श्वयथोर्दोषे वह्निमान्द्येऽरुचावपि ॥ ३४२
आर्द्रकेक्षुरकगोक्षुराभया-
दारुमुस्तसुपुनर्नवैः श्रृतम् ।
पीयते यदि कषायमातुरोऽ-
सौ नरः श्वयथुभिर्न बाध्यते ॥ ३४३
आर्द्रकपथ्यागोक्षुर-
वर्षाभूमुसुरीकदम्बर्याः । ?
एषां काथः श्वयथौ
मन्दाग्नेर्दीपितोऽग्निश्च ॥ ३४४
मुस्तावत्सकवर्षाभूदारुदार्वीसनागरम् ।
कथितं सलिलं शोफज्वरातीसारनाशनम् ॥ ३४५
त्रिफलाऽमरदारुपञ्चकोलैः
सलिलं प्रकथितं ससिन्धुचूर्णम् ।
पिबतां श्वयथू[2]दरप्रणाशः
समतां यात्यनलः सपथ्यभाजाम् ॥ ३४६
व्याघ्रीबृहत्यतिगुहासगुहाश्वदंष्ट्रा-
श्रीपर्णिनीज्वलनमन्थवसन्तदूती ।
[3]टुण्टूकबिल्वमिति तोयकषायसङ्घं
शोफाग्निमान्द्यमरुदामयजित्प्रदिष्टम् ॥ ३४७

---

1. मयाम्  2. अङ्गदोष  3. मण्डूक

अभयाऽमरदारुचित्रकाणां
कणचूर्णाविलमम्बु पीयमानम् ।
श्वयथूदरगुल्मविड्विबन्धा-
नचिरान्न्यक्कुरुते कफानिलोत्थान् ॥ ३४८

पञ्चकोलाभयादारुदशमूलपुनर्नवम् ।
कफवातोत्तरे शोके सन्निपाते च शस्यते ॥ ३४९

अमृताद्वयशिग्रुदाडिमत्वक्-
सुरकाष्ठं सपुरं सगोजलं च ।
श्वयथूदरकुष्ठपाण्डुरोग-
क्रिमिमोहोत्थकफानिलानपोहेत् ॥ ३५०

देवदार्वभयाशुण्ठीवर्षाभूनिःसृतं जलम् ।
पेयं शोफविनाशाय पाण्डुश्लीपदनाशनम् ॥ ३५१

पुनर्नवैर्देवकाष्ठैः शुण्ठीभिः कथितं जलम् ।
मध्वाढ्यं सगुडं पेयं शोफनुत्परमौषधम् ॥ ३५२

अजाजिपाठाघनपञ्चकोल-
व्याघ्रीरजन्यः सुखतोयपीताः ।
शोफं त्रिदोषं चिरजं प्रवृद्धं
निघ्नन्ति भूनिम्बमहौषधाश्च ॥ ३५३

शुण्ठीपुनर्नवैरण्डपञ्चकोलश्रृतं जलम् ।
वातिकश्वयथौ शस्तं वातानाहपरिग्रहे ॥ ३५४

विशाला त्रिफला तिक्ता गवाक्षी शङ्खिनी त्रिवृत् ।
पटोलमूलं त्रायन्ती तुल्यान्यर्धं महौषधम् ॥ ३५५

क्राथोऽयं पित्तशोफघ्नः पीतो वाऽऽमलकाद्रसः ।
विशालात्रायमाणाभ्यां श्रृतमारग्वधेन वा ॥ ३५६

विजयामोरटक्राथः सर्वशोफविनाशनः ।
पटोलमूलत्रायन्तीयष्टयाह्वकटुकाऽभयाः ॥ ३५७

दारु दार्वी हिमं दन्ती विशाला निचुलं कणा ।
तत्क्राथः सघृतः पीतो हन्त्यदाहं च तृड्भ्रमान् ।

ससन्निपातवीसर्पशोफदाहविषज्वरान् ॥ ३५८

॥ पुनर्नवाऽऽदिक्काथः ॥

पुनर्नवानिम्बपटोलशुण्ठी-
तिक्ताऽमृतादार्व्यभयाकषायः ।
सर्वाङ्गशोफज्वरकासशूल-
श्वासान्वितं पाण्डुगदं निहन्ति ॥ ३५९

॥ दीप्यकादिक्काथः ॥

दीप्यकमरिचाजाजी-
गण्डीरं साजगन्ध[1]दशमूलम् ।
शमयति सपञ्चकोलं-
शोफोन्मदशूलमग्निसादं च ॥ ३६०

॥ विसर्पे ॥

पटोलारिष्टदार्वीत्वक्तिक्तात्रायन्तिकाऽमृताः ।
सयष्टिमधुकाः सर्वान् विसर्पान् घ्नन्ति पानतः ॥
धात्रीपटोल[2]मुस्तैश्च क्काथः सद्यो विसर्पनुत् ॥ ३६१
धात्रीत्रिवृत्पीलुहरीतकाक्षैः
सगोस्तनीनागरनिम्बयुक्तैः ।
क्काथो गुळाढ्यः शमयेत् प्रवृद्ध-
विसर्पदाहज्वरशोफशूलान् ॥ ३६२
वृषखदिरपटोलपत्रनिम्ब-
त्वगमृतवल्ल्यभयाकृतः कषायः ।
... ... ...
... ... ...(?)
धात्रीपटोलमुद्गानां क्काथो वा सितया युतः ।
पटोलचन्दनोशीरमुस्ताक्काथश्च तद्धितः ॥
शृतो वा शुण्ठिदुस्स्पर्शपद्मकेसरचन्दनैः ॥ ३६३

---

1. मदशूलं  2. पूलाभ्यां

## ॥ पटोलमूलादिकषायः ॥

पटोलमूलत्रिफलाविशालाः
पृथक् त्रिभागापचित[1]त्रिशाणाः ।
स्यात् त्रायमाणा कटुरोहिणी च
भागार्धिके नागरपादयुक्ते ॥
एतत् पलं [2]जर्जरितं विपक्वं
जलं पिबेद्दोष[3]विशोधनाय ॥ ३६४

## ॥ कुष्ठे ॥

## ॥ वज्रकषायः ॥

पटोल[4]त्रिफलाऽरिष्टगुडूचीधावनीवृषैः ।
सकरञ्जैः कषायोऽयं कुष्ठजिद्वज्रकं मतम् ॥ ३६५
निहन्ति सद्यो निर्यूहः पानात् सर्वत्वगामयान् ।

## ॥ दार्व्यादिक्वाथः ॥

दार्वीखदिरनिम्बानां त्वक्क्वाथः कुष्ठसूदनः ॥ ३६६

## ॥ आरग्वधादिकषायः ॥

आरग्वधस्य मूलानि मदनं स्वादुकण्टकम् ।
मूर्वापटोलशार्ङ्गेष्टापाठाश्चैषां समाक्षिकः ॥ ३६७
शृतः शीतोऽपि वा पीतः कषायः कुष्ठनाशनः ।

## ॥ मुस्तादिक्वाथः ॥

मुस्ताद्विरजनीपाठात्रिफलाकुष्ठजोऽथ वा ॥ ३६८

## ॥ दार्वीखदिरादिः ॥

दार्वीखदिरनिम्बानां सुरसस्य च कुष्ठहा ।
कषायः केवलः पीतः सक्षौद्रः सघृतोऽथ वा ॥ ३६९

---

1. विषाणा
2. तत्कथितं
3. विनाशनाय
4. मूलत्रिफला

॥ वासाऽऽदिकषायः ॥

[1]वासापटोलशम्याकत्रिफलानिम्बपर्पटैः ।
कषायः कुष्ठनाशाय पातव्यः परमौषधम् ॥ ३७०

॥ बब्बूलादिकषायाः ॥

बब्बूलककषायो वा ब्राह्म्या निम्बस्य वा पुनः ।
खदिरस्य वृषस्यापि कुष्ठजिद्राजवृक्षजः ॥ ३७१

॥ खदिरकषायः ॥

शीतः कषायः खदिरस्य पीतः
सक्षौद्रताक्ष्यों हरति प्रसह्य ।
हृत्कण्ठरोगापचिकुष्ठमेहान्
बलाहकान् वायुरिव प्रचण्डः ॥ ३७२

॥ दार्व्यादिकषायाष्टकम् ॥

दार्वीरसाञ्जनस्य च,
पटोलमूलस्य, खादिरसारस्य ।
आरग्वधवृक्षकयोः,
त्रिफलायाः, सप्तपर्णस्य ॥ ३७३
इति षट् कषाययोगाः
कुष्ठघ्नाः सप्तमश्च तिनिशस्य ।
[2]स्नाने पाने च हिता-
स्तथा[3]ष्टमश्चाश्वमारस्य ॥ ३७४

॥ दोषभेदेन कषायभेदाः ॥

वाते खदिरशुण्ठ्यम्बु स्याद्दारुत्रिफले कफे ।
धात्रीखादिरनिम्बाम्बु पित्ते मिश्रे तु मिश्रितैः ॥ ३७५

॥ निशोत्तमाऽऽदिकषायः ॥

निशोत्तमानिम्बपटोलपत्र-
तिक्तावचालोहितयष्टिकाभिः ।

---

1. वृषा 2. स्नेहे 3. अष्टस्याप्मरस्य

शृतः कषायः कफपित्तकुष्ठं
सुसेवितो धर्म इवोच्छिनत्ति ॥ ३७६

॥ पटोलनिम्बादिकषायः ॥

पटोलनिम्बमञ्जिष्ठा वाकुची रजनी वचा ।
तिक्ता च कफपित्तोत्थं कुष्ठं काथो जयत्ययम् ॥ ३७७

॥ लेपयोगाः ॥

खदिरामलकारुष्कर-
निशाऽभयासप्तपर्णकरवीराः ।
कुष्ठघ्नाश्चतुरङ्गुल-
विळङ्गजातिप्रवालाश्च ॥ ३७८
नळदकृतमालचन्दन-
सर्षपनतनिम्बकुटजमधुकानि ।
कण्डूदाहविसर्पान्
सनक्तमालानि निघ्नन्ति ॥ ३७९

॥ श्वित्रे ॥

ाकोदुम्बरिकामूलचन्द्रलेखाशृतं जलम् ।
ीतं प्रभाते सश्वित्रं कुष्ठमौदुम्बरं हरेत् ॥ ३८०

॥ क्रिमिषु ॥

॥ शिग्रुदार्व्यादिकषायः ॥

शिग्रुदार्व्याखुकर्ण्यब्दत्रिफलाभिः शृतं जलम् ।
कृष्णाविळङ्गकल्काढ्यं पिबेत् क्रिमिविनाशनम् ॥ ३८१

॥ देवदार्वादिकषायः ॥

देवदारुमहाशिग्रुफलत्रयपयोमुराः ।
काथः पिप्पलिमृद्वीकाकल्कः सर्वक्रिमीन् हरेत् ॥

॥ मुस्ताखुकर्ण्यादिकषायः ॥

मुस्ताखुकर्णीफलदारुशिग्रु-
काथः सकृष्णाकृमिशत्रुकल्कः ।
मार्गद्वयेनापि चिरप्रवृत्त-
कृमीन् निहन्ति क्रिमिजांश्च रोगान् ॥ ३८३

॥ सुरसादिगणप्रयोगः ॥

सुरसादिगणकाथं चूर्णितैलादिकल्कितम् ।

॥ पलाशबीजप्रयोगः ॥

पलाशबीजकल्कं वा पिबेद्धान्याम्लसंयुतम् ॥ ३८४

॥ कृमिशत्रुप्रयोगः ॥

आरनालेन पातव्यः कृमिघ्नः कृमिशत्रुजः ।
पीतो हन्ति कृमीन् सर्वान् लिकुचस्य रसेन वा ॥ ३८५

॥ सुरसाऽऽदिकाथः ॥

सुरसा चाखुकर्णी च शिग्रुमूलं तथैव च ।
नीरदं त्रिफला चैव काथ एतैर्विमिश्रितः ॥ ३८६
चूर्णैश्च कृमिशत्रूणामाशु नाशयते कृमीन् ।

॥ ब्रह्मवृक्षादिकाथः ॥

ब्रह्मवृक्षप्रवालाग्नित्रिफलाकथितं जलम् ॥
हिङ्गुयुक्तं पिबेद्रात्रौ सर्वकृमिविनाशनम ॥ ३८७

॥ मुस्तादिकाथः ॥

मुस्ताऽग्निशिग्रुचिरिबिल्वमहौषधानां
काथः पलाशतरुबीजरजोविमिश्रः ।
कृम्यामगौरवमहोदरवह्निमान्द्य-
[1]दोषान् हरेदरुचिपीनसनाशनं स्यात् ॥ ३८८

1. गृहण्यामम

॥ आखुकर्णीपलाशाङ्कुरकषायौ ॥

आखुकर्णिकषायो वा पलाशाङ्कुरजोऽथ वा ।
पेयः कृमीणां नाशाय सयष्टीशर्करस्तथा ॥ ३८९

॥ खदिरकुटजादिकषायः ॥

खदिरः कुटजः पिचुमन्दवचा-
त्रिकटुत्रिफलाचिरिबिल्वयुतम् ।
समनिष्कथितं पिबतामचिरात्
कृमिकोटिशतान्यपि नाशयति ॥ ३९०

॥ आखुकर्णीमूलकषायः ॥

शृतमाखुकर्णमूलं
तण्डुलतोयेन पीतमपहरति ।

॥ पलाशदलक्वाथः ॥

कृमिकुलमथवा हन्यात्
पलाशदलसाधितः क्वाथः ॥ ३९१

॥ अक्षीबादिकषायः ॥

अक्षीबमरिचकेबुक-
गण्डीरविलङ्गनिर्गुण्ड्यः ।
घ्नन्ति क्रिमिं श्वदंष्ट्रा-
वृषाखुकर्ण्यस्तथा न चिरात् ॥ ३९२

॥ वाते ॥

॥ भद्रदार्वादिः ॥

भद्रदारु नतं कुष्ठं दशमूलं बलाद्वयम् ।
वायुं [1]वीरतरादिश्च विदार्यादिश्च नाशयेत् ॥ ३९३

॥ शुण्ठीबलाक्वाथः ॥

शुण्ठीबलाभ्यां क्वाथोऽयं हिङ्गुसैन्धवसंयुतः ।
अग्निमूलसमायुक्तो वातदोषविनाशनः ॥ ३९४

---

1. वितत्तरादींश्च

॥ निर्गुण्ड्येरण्डादिः ॥

निर्गुण्ड्येरण्डकोरण्टनलद्वयनिदिग्धिकैः ।
अश्वगन्धाकुबेराक्षिहपुषाहिङ्गुभिः कृतः ॥ ३९५
काथोऽयं शमयेद्वातं बलाकोरण्डजं तथा ।

॥ बलासैरेयकादिकषायः ॥

बलासैरेयकैरण्डनिर्गुण्डीभिः शृतं जलम् ॥ ३९६
वातरोगमशेषेण नाशयेन्नात्र संशयः ।

॥ चित्रकप्रयोगः ॥

साधितं चित्रकेणाथो कषायमनिलापहम् ॥ ३९७
केवलं क्षीरपक्कं वा गुल्मानाहविबन्धनुत् ।

॥ विश्वैरण्डादिकषायाः ॥

विश्वैरण्डकसैरेयहयगन्धाशृतं जलम् ॥ ३९८
बलाशुण्ठीकषायं वा बलासैरेयविश्वजम् ।
सैरेयविश्वकाथं वा पाययेत्तैलसंयुतम् ॥
पञ्चमूलकषायं वा सर्वानिलहरं परम् ॥ ३९९

॥ हपुषपर्पटादिकषायः ॥

हपुषपर्पटमोरटशिग्रुकैः
समवचासहितैः सपुनर्नवैः ।
कृतमनेकगुणं पिबतां जलं
[1]त्वभिभवो न भवेदनिलोद्भवः ॥ ४००

॥ सिन्धुवारादिकषायः ॥

सिन्धुवाराभयाकृष्णाकुलत्थैः साधितं जलम् ।
कोष्ठजेऽनिलजे व्याधौ हितं वातानुलोमनम् ॥

॥ प्रसारिणीकषायः ॥

प्रसारिण्याः कषायो वा सैन्धवेन समन्वितः ॥ ४०१

---

1. त्वविथयोनभतेमनिलोद्भवः

॥ बलाबिल्वादिकषायः ॥

बलाबिल्वशुण्ठीकषायो विशेषात्
परं गुल्महृच्छूल[1]सुप्राह्ववातम् ।
तथा वातरक्तारुचिच्छर्दिहिक्का-
कम्पाञ् शिरोरोगजालं च हन्यात् ॥ ४०२

॥ दशमूलक्राथप्रयोगः ॥

क्राथो भिषग्भिर्दशमूलजो वा
प्रशस्यते व्याधिगणेषु कोष्णः ।
साम्लत्रिवृत्सैन्धवसंप्रयुक्तो
निरूहयोगादनिलात्मकेषु ॥ ४०३

॥ देवदारुवचाऽऽदिकषायः ॥

देवदारुवचाविश्वकाकाण्डैः साधितं जलम् ।
पाययेत्तैलमिश्रं तु सर्ववातविकारजित् ॥ ४०४

॥ दारुशुण्ठ्यादिकषायः ॥

दारुशुण्ठीबलाबिल्वनिर्गुण्डीलशुनं वचा ।
कोरण्डसारिणीसिद्धः क्राथः सर्वानिलापहः ॥ ४०५

॥ बलामूलकषायः ॥

बलामूलकषायं च घृतसंमिश्रितं पिबेत् ।
सर्ववातविकाराणां गर्भिणीनां च शस्यते ॥ ४०६

॥ दहनसारिण्यादिकषायः ॥

दहनसारिणिमोरटयक्षद्द-
प्रजनिशिग्रुकुलत्थशृतं जलम् ।

॥ कुबेरहगादिकषायः ॥

जयति वातमथापि कुबेरदृ-
ग्लशुनपक्कजलं कटुहिङ्गुना ॥ ४०७

1. गुतंच

॥ हिङ्गुसैन्धवादिः ॥

हिङ्गुसैन्धववचावरणाग्नि-
ग्रन्थिकैः सहपुनर्नवचित्रैः ।
शिग्रुपाटलिमहौषधयुक्तैः
क्षारजीरकयुतैः शृततोयम् ॥ ४०८
हन्ति वातमचिरेण चिरोत्थं
सर्ववातजहरश्च कषायः ।

॥ कोरण्टमूलादिकषायौ ॥

कोरण्टमूलं सपुनर्नवं च
शिग्रूत्थमूलं च समं विपाच्यम् ।
पिबेत् कषायं त्वनिलामयार्ता-
स्तथाऽभयानागरसिद्धमम्भः ॥ ४०९

॥ ऊरुस्तम्भे ॥

॥ मदनादिकषायः ॥

मदनं चन्दनं कुष्ठं तालीसं धातकीफलम् ।
पक्कमम्बुसमायुक्तमूरुस्तम्भविनाशनम् ॥ ४१०

॥ चव्याग्निमन्थकषायः ॥

चव्याग्निमन्थनिष्क्काथमूरुस्तम्भे मधूत्कटम् ।

॥ शोभाञ्जनादिः ॥

शोभाञ्जनं चाग्नि[1]मन्थो बिल्वमूलं च पिप्पली ॥ ४११
बाणो मुद्गः कुलत्थश्चाप्यूरुस्तम्भविनाशनः ।

॥ वचाबिल्वादिकषायः ॥

वचाबिल्वबलापाठादेवदारु सचित्रकम् ॥ ४१२
कषायं क्षौद्रसंयुक्तमूरुस्तम्भविनाशनम् ।

---

1. मण्डं

॥ रेचनयोगः ॥

कुलत्थपथ्यासिद्धेन [1]चित्रातैलयुतेन च ॥ ४१३

रेचयेद्वातरोगेषु कषायेणाल्पयो यदि ।

॥ रक्तवाते ॥

॥ वासागुलूच्यादिकषायः ॥

[2]वासागुलूचीचतुरङ्गुलाना-

मेरण्डतैलेन पिबेत् कषायम् ।

क्रमेण सर्वाङ्गजमप्यशेषं

जयेदसृग्वातभवं विकारम् ॥ ४१४

॥ निशावराऽऽदिकषायः ॥

निशावरामेघकषायमेव

सितायुतं क्षौद्रयुतं पिबेद्वा ।

॥ शुण्ठीपथ्याऽऽदिकषायः ॥

सशुण्ठिपथ्याकटुरोहिणीनां

काथो निहन्यादपि वातरक्तम् ॥ ४१५

॥ धात्र्यादिकषायौ ॥

धात्रीहरिद्राजलदैः कषायो

द्राक्षाहरिद्राजलदैरथो वा ।

पीतो निहन्याद्बलवद्विषं वा

वातं सरक्तं बहुतोदयुक्तम् ॥ ४१६

॥ बलाऽमृतादिकषायाः ॥

बलाऽमृताकषायं वा कषायं वा बलाश्रृतम् ।

तोयलक्ष्याश्च (?) वासाऽऽद्यमम्बु वातासृनुत्परम् ॥ ४१७

॥ त्रिवृदादिकाथः ॥

त्रिवृद्विदारीक्षुरककाथो वातविनाशनः ।

---

1. त्रित्रा 2. पाशा

॥ कोकिलाक्षादिक्वाथः ॥

कोकिलाक्षामृताक्वाथं पिबेत् कृष्णायुतं तथा ॥ ४१८

॥ पथ्याप्रयोगः ॥

पथ्यासेवी त्रिसप्ताहान्मुच्यते वातशोणितात् ।

॥ दुरालभाऽऽदिकषायः ॥

दुरालभाबलाबिल्वनागरं धान्यकं स्थिरा ॥ ४१९
बृहतीद्वयमूलं तैरिक्षुकाण्डान्वितैः कृतः ।
क्वाथस्तु पीतः सप्ताहाद्वातशोणितनाशनः ॥ ४२०

॥ कोकिलाक्षप्रयोगः ॥

कोकिलाक्षकनिर्यूहः पीत[1]स्तच्छाकभोजिना ।
कृपाऽभ्यास इव क्रोधं वातरक्तं नियच्छति ॥ ४२१

॥ गर्भिणीसूतिकारोगचिकित्सा ॥

॥ कोष्ठवाते ॥

विश्वौषधबलाक्वाथो गुलतैलघृताविलः ।
कल्को वा सूतिकायास्तु जयेत्कोष्ठस्थ[2]मारुतम् ॥ ४२२

॥ ज्वरे ॥

दशमूलीरसः शुण्ठी पाठा वा सूतिकाज्वरे ।
श्रीपर्ण्याश्च गुडूच्याश्च क्वाथं समधुशर्करम् ॥ ४२३
गर्भिणीं पाययेद्वैद्यः सर्वज्वरविनाशनम् ।
सामे रक्ते सपित्ते च सक्षौद्रं तत् प्रशस्यते ॥ ४२४

॥ शोफोदावर्तयोः ॥

वर्षाभूमूलनिक्वाथं सघृतं गुलसंयुतम् ।
गर्भिणीं पाययेदेतच्छोफोदावर्तनाशनम् ॥ ४२५

---

1. तच्छाग 2. दर्शनम्

## ॥ गर्भशूले ॥

बलानागरचित्राणां क्वाथं पाठादिमेव वा ।
पीत्वा विमुच्यते साध्यं गर्भिणी गर्भशूलतः ॥ ४२६
शुण्ठीबले विनिष्क्वाथ्य गर्भिणी यमकेन च ।
गुलेन च समं पीत्वा गर्भशूलाद्विमुच्यते ॥ ४२७

## ॥ गुल्मे ॥

शुण्ठीबिल्वबलाक्वाथमाज्यतुल्यं सरामठम् ।
सर्वगुल्महरं पेयं गर्भिण्या हिङ्गुना विना ॥ ४२८
पञ्चमूलबलानां च क्वथितं क्षीरसंयुतम् ।
गर्भिणीं पाययेदेतद् गुल्मशूलहरं परम् ॥ ४२९

## ॥ स्तन्यजननयोगाः ॥

शालिकुशकाशषष्टिक-
वीरण[1]दर्भेक्षुवालिकेक्षूणाम् ।
तद्वद्रुन्द्रोत्कटयो-
र्मूलमलं स्तन्यजननाय ॥ ४३०
पाठानागरसुरतरु-
घनामृताशारिबेन्द्रयवदूर्वाः ।
कटुका किराततिक्ता
वर्गोऽयं स्तन्यजननाय ॥ ४३१
स्तन्ये त्रिदोषमलिने दोषघ्नान् योजयेद् गणान् ।
द्राक्षापीलुपरूषक
मञ्जिष्ठाशारिबाऽमृतापाठाः ।
त्रिफला चेति गणोऽयं
तत्संशमनाय निर्दिष्टः ॥ ४३२

---

1. दर्भेक्षुपालिकेक्षुणाम्

## ॥ बालातिसारे ॥

दार्वी हरिद्रा कुटजस्य बीजं
सहे च यष्टीमधुकं च तुल्यम् ।
क्वाथः कृतः स्तन्यकृते तु दोषे
सर्वातिसारेषु च नित्यमिष्टम् ॥ ४३३

बिल्वं च मधुकं जम्बूः समङ्गा हस्तिपिप्पली ।
कषायो मधुसंयुक्तो बालातीसारनाशनः ॥ ४३४

उशीरजम्ब्वाम्रवटप्ररोहैः
क्वाथो रसो वा मधुसंप्रयुक्तः ।
पीतो ज्वरच्छर्द्यतिसारतृष्णां
बालस्य मूर्छामपहन्ति चैवम् ॥ ४३५

समङ्गाऽ[1]तिबलालोध्रधान्योवैधः शृतं भिषक् ।
कुमारं पाययेत् क्वाथं श्वासातीसारनाशनम् ॥ ४३६

समङ्गाधातकी [2]मुस्तं स्तन्ययुक्तं पिबेच्छिशुः ।
लोध्रपियङ्गुस्तन्यं च ज्वरातीसारनाशनम् ॥ ४३७

समङ्गाधातकीपुष्पशारिवालोध्रसंभवः ।
निष्क्वाथो मधुसंयुक्तः शीतलः कुक्षिरोगनुत् ॥ ४३८

आम्रजम्बूप्रवालं च पद्मोत्पलशतावरि ।
एतैः क्वाथं पिबेद्बालो रक्तातीसारनाशनम् ॥ ४३९

पाठाऽम्बुदं च शुण्ठी च कषायं क्षौद्रसंयुतम् ।
रक्तातीसारनाशाय पिबेद्बालो विशेषतः ॥ ४४०

शुद्धशुण्ठीकषायं तु पिप्पलीचूर्णसंयुतम् ।
पिबेदरोचके शूले प्रतिश्यायं च नाशयेत् ॥ ४४१

वृषचव्योषणक्वाथः पिप्पलीचूर्णसंयुतः ।
श्वासकासप्रतिश्यायान् निहन्याच्छ्लेष्मजानपि ॥ ४४२

---

1. सुमतिबलाधान्ययावैः 2. मुस्तं

॥ वक्त्ररोगे ॥

करञ्जयवनिर्गुण्डीसुरसादेवदारुभिः ।
त्रिपिप्पलीकमुद्रैश्च क्राथो जिह्वारुजाऽपहः ॥ ४४३

त्रिफलाखदिराञ्जनलोहमलैः
सकरञ्जशिफैः सहमागधिकैः ।
घृततैलयुतं क्वथितं सलिलं
वदने निहितं वदनामयजित् ॥ ४४४

द्राक्षागुळूचीसुमनःप्रवाळ-
दार्वीयवा[1]सत्रिफलाकषायः ।
क्षौद्रेण युक्तः कबलग्रहोऽयं
सर्वामयान् वक्त्रगताान्निहन्ति ॥ ४४५

स्वरसः खदिराद् दार्व्या घनीभूतः सगैरिकः ।
आस्यस्थः समधुर्वक्त्रपाकनाडीव्रणापहः ॥ ४४६
पटोलनिम्बयष्ट्याह्वावासाधात्र्यरिमेदसाम् ।
खदिरस्य वरायाश्च पृथगेवं प्रकल्पना ॥ ४४७

॥ सप्तच्छदादिकषायः ॥

सप्तच्छदोशीरपटोलमुस्ता-
हरीतकीतिक्तकरोहिणीभिः ।
यष्ट्याह्वराजद्रुमचन्दनैश्च
क्वाथं पिबेत् पाकहरं मुखस्य ॥ ४४८

॥ पटोलशुण्ठ्यादिः ॥

पटोलशुण्ठीत्रिफलाविशाला-
त्रायन्तितिक्ताद्विनिशाऽमृतानाम् ।
पीतः कषायो मधुना निहन्ति
मुखे स्थितांश्चास्यगदानशेषान् ॥ ४४९

॥ मुस्तातिविषाऽऽदिः ॥

क्वाथः समुस्तातिविषेन्द्रदारु-
कलिङ्गपाठाकटुरोहिणीनाम् ।
गोमूत्रयुक्तो मधुना विमिश्रः
पेयो गलव्याधिषु सर्वजेषु ॥ ४५०

॥ गोक्षुरादिक्वाथौ ॥

गोक्षुरेक्षुरनिर्गुण्डीक्वाथो दन्तास्रनाशनः ।
पुनर्नवाभयाविश्वैः कथितं

॥ गोमूत्रगण्डूषः ॥

केवलं तु वा ॥ ४५१

गण्डूषश्च गवां मूत्रैर्मुखरोगहरः परः ।

॥ जातिपत्रादिक्वाथः ॥

जातिपत्रारिमेदत्वगमृताविश्वभेषजैः ॥
क्वाथोऽयं मुखरोगेषु शस्तो गण्डूषधारणे ॥ ४५२

॥ भगन्दरे ॥

निर्गुण्डीवरणैरण्डचित्रकैः कथितं जलम् ।
ससैन्धवं च तैलाढ्यं हन्ति पञ्च भगन्दरान् ॥ ४५३
अग्निमन्थस्य मूलं च मूलं चित्रकबिल्वयोः ।
मूलमार्तगलस्यापि शृतमेभिर्जलं हरेत् ॥
हरीतकीत्रिवृत्कृष्णाचूर्णैः पञ्च भगन्दरान् ॥ ४५४

॥ गण्डमालायाम् ॥

हंसपाद्यमृतानिम्बैः पिप्पलीवृक्षकैः शृतम् ।
जलं गलकगण्डं च गण्डमालां च नाशयेत् ॥ ४५५

श्यामाऽमृतादहनकूलकशृङ्गिबेर-
निम्बद्रुमैश्च सह मुद्गविपक्ववारि ।
शीतं निहन्ति सहसा त्रिफलाप्रयुक्तं
शोफं च श्लीपदमहो गलगण्डमालाम् ॥ ४५६

निम्बत्वगग्निबृहती-
त्रिफलाकुलकामृताविश्वैः ।
क्राथः प्रगे सुपीतः
समधुपुरो गण्डमालाघ्नः ॥ ४५७

॥ जीवन्तीहिरिबेरादिः ॥

जीवन्तीहिरिबेरकत्रिफलिकावाशाऽमृताशारिबा-
शुण्ठीनिम्ब[1]पयोदचन्दनपटोलोशीरमुस्तैरपि ।
[2]निष्काथोऽष्टमशेषितो मधुगुलप्रक्षेपणात् संस्कृतः
पीतश्चेज्ज्वरितेन तस्य पिडकोत्पत्तेः प्रसङ्गः कुतः ॥ ४५८

॥ मसूरिकायाम् ॥

निम्बामृतामधुकचन्दनसंश्रृताम्बु
विस्फोटकज्वरहरं ससितं प्रपीतम् ।
दूर्वाऽब्दनिम्बकटशर्करलेपनं वा
क्षौद्राम्बुपिष्टमथ वा मलयोद्भवं स्यात् ॥ ४५९

सपिप्पलीकं प्रपिबेन्निम्बक्राथमनारतम् ।
मसूरिकासु सर्वासु श्रेष्ठमेतद्विसर्पके ॥ ४६०

आमलक्या गुलूच्याश्च कषायं शर्कराऽन्वितम् ।
सारिबादिकषायं वा प्रपिबेत् प्रातरुत्थितः ॥ ४६१

यः कण्टकारीबृहतीवयस्था-
कुस्तुम्बरीनागरपिप्पलीभिः ।
श्रृतः कषायो मधुना स मिश्रो
मसूरिकामष्टविधां निहन्ति ॥ ४६२

अमृतानिम्बकुलानि धात्री ब्राह्मी च चन्दनम् ।
एषां कषायः संसिद्धो मसूरीनाशनः परः ॥
घनचन्दनपर्पोट सिरामृताब्दवाजरे स्फोटे च ॥ (?) ४६३

ब्राह्म्या गुलूच्या मधुकेन धात्र्या
पटोलनिम्बेन च सिद्धतोयम् ।

1. शालाक 2. पाकेनाम्लव

पेयं नृणां पित्तसमुत्थितायां
मसूरिकायां सगुळं प्रयुक्तम् ॥ ४६४
पाक्यं गुळूच्या मधुशर्कराभ्यां
पेयं तथा पित्तसमुत्थितायाम् ।
पटोलतोयामलकामृतानां
तोयं तथा शर्करायाऽवगाढम् ॥ ४६५
वासाऽमृतानिम्बपटोलकुष्ठैः
सधान्यकैः सेन्द्रयवैः समुस्तैः ।
शृतः कषायः पवनोत्थितायां
मसूरिकायां सगुलः प्रपेयः ॥ ४६६
छिन्नोद्भवाचन्दनशारिबाणां
शतावरीपद्मकशेरुकाणाम् ।
क्वाथं पिबेच्छर्करयाऽवगाढं
मसूरिकायां पवनोत्थितायाम् ॥ ४६७

चन्दनं त्रायमाणा च त्रिफला कटुरोहिणी ।
कारवेल्लं पटोलं च मुस्ता पर्पटकं जलम् ॥ ४६८
गुळूची खदिरं चैव सहे च कृतमालकम् ।
दन्ती च त्रिवृता द्राक्षा शर्करा मधुयष्टिका ॥ ४६९
कथितः शीतलो ह्येष गणः पाने प्रशस्यते ।
द्राक्षा च त्रायमाणा च त्रिफला कटुरोहिणी ॥
प्रातः पानाय दातव्यं विस्फोटकविनाशनम् ॥ ४७०

जलधरखदिरपटोली-
चन्दनपिचुमन्दजः क्वाथः ।
गुलुलितः पातव्यो
विस्फोटातङ्कनाशाय ॥ ४७१

सगुलः सचन्दनाढ्यः
शीतोऽमृतवल्लरीक्वाथः ।

शमयति पानात् सद्यो
मसूरिकाः पूर्वरूपेषु ॥ ४७२

॥ प्रदरे ॥

नालिकेरप्रसूनैश्चा[1]शोकवल्केन सर्पिषा ।
प्रसाधितमिदं वारि वारयेत् प्रदरामयम् ॥ ४७३
उत्पलं मधुकं लोध्रं मधुरं देवदारु च ।
एतैः कषायं सक्षौद्रमतिलोहितनाशनम् ॥ ४७४

वत्सादनीवृषमयूरकबन्धुजीव-
पीवर्युदुम्बरबलाविहितं कषायम् ।
पीत्वा गुळेन सहितं प्रमदा क्षणेन
मुञ्चत्यसृग्दरविकारमशेषमेव ॥ ४७५

काकमाचीदलकाथो हविषा च समन्वितः ।
असृग्दरं वातभवं क्षिप्रमेव व्यपोहति ॥ ४७६
नाळिकेरस्य पुष्पाणां नूतनानां रसं पिबेत् ।
प्रदरं प्रहरत्याशु शर्करामधुसंयुतम् ॥ ४७७
बला च्छिन्नरुहा धात्री वल्कलं बिल्वमोचयोः ।
काथोऽसृग्दरपित्तासृगस्थिस्रावनिषूदनः ॥ ४७८

मुसलीखदिरामलक-
त्रिकण्टजम्बूवरीकाथः ।
सास्थिस्रावं प्रदरं
प्रमार्ष्टि [2]शीतः प्रगे पीतः ॥ ४७९

अम्भोदा[3]र्जुनवाराहिखदिरैर्वारि साधितम् ।
मधुना मधुरीभूतं वनिताऽस्थिस्रुतौ पिबेत् ॥
काथो मधुरसंसिद्धः स्रावमस्थ्नां निहन्ति च ॥ ४८०

॥ इति श्रीविष्णुभट्टसुतपण्डितदामोदरविरचितः
आरोग्यचिन्तामणिः
समाप्तः ॥



---
1. जयपालं  2. मुदन्  3. आजिन